मेव द्विजातिकर्मणां व्रतचर्यानङ्गभूतानां हानिर्न सर्वेषाम् । तावन्मात्रबाधेन हानिवचनस्य चरितार्थत्वात् । इयं च मनुयाज्ञवल्क्यगौतमादिप्रतिपादिता द्वादशवार्षिकव्रतचर्यैकैव न पुनर्भिन्ना, परस्परसापेक्षत्वादविरोधाच्च । तथा हि 'भिक्षाशी कर्म वेदय'न्नित्युक्ते किं भिक्षापात्रं केषां वा गृहेषु कतिषु वेत्याकाङ्क्षा जायेतैव । तत्र 'लोहितकेन खण्डशरावेण' इत्यापस्तम्बवचनैः परिपूरणमविरुद्धम् । यतः सर्वैरेककल्पोपदेशात् । यत्कैश्चिदुक्तं मनुगौतमाद्युक्तेनिकर्तव्यतायाः परस्परसापेक्षत्वेऽपि विकल्प इति, तदनिरूप्यैवोक्तमिति मन्तव्यम् । एवं द्वादशवर्षाणि व्रतचर्यामावर्त्य ब्रह्महा शुद्धिमाप्नुयात् । इयं चाऽकामकृतब्रह्मवधविषया । (११।८९)—'इयं विशुद्धिरुदिता प्रमाप्याऽकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' ॥ इति मनुस्मरणात् । अत्रेदं चिन्तनीयम् । किं द्वित्र(१) ब्राह्मणवधे प्रायश्चित्तस्य तन्त्रत्वमुतावृत्तिरिति । तत्र केचिन्मन्यन्ते ब्रह्महा द्वादशाब्दानीत्यत्र ब्रह्मशब्दस्यैकस्मिन्द्वयोर्बहुषु साधारणत्वादेकस्मिन्ब्राह्मणवधे यत्प्रायश्चित्तं तदेव द्वितीये तृतीयेऽपि । तत्रैकब्राह्मणवधनिमित्तकप्रायश्चित्तानुष्ठाने सतीदं कृतमिदं नेति न शक्यते वक्तुम् । देशकालकर्तॄणां प्रयोगानुबन्धभूतानामभेदेनागृह्यमाणविशेषत्वात्तन्त्रानुष्ठानेनैव पापक्षयलक्षणकार्यनिष्पत्तिर्युक्ता । यथा तन्त्रानुष्ठितैः प्रयाजादिभिराग्नेयादिषु तन्त्रेणैवाऽनेकोपकारलक्षणकार्याणां निष्पत्तिः । न चैवं वाच्यम्, 'द्वि(२)त्रब्राह्मणवधे पापस्य गुरुत्वादेनसि गुरूणि गुरूणि लघुनि लघूनि' इति, गौतमवचनादावृत्तमेव प्रायश्चित्तानुष्ठानं युक्तम्, विलक्षणकार्ययोस्तन्त्रेण निष्पत्त्यनुपपत्तेरिति । यतो नेदं वचनमावृत्तिविधायकं किन्तूपदिष्टानां गुरुलघुकल्पानां व्यवस्थाप्रतिपादनपरम् । न च द्वितीयब्राह्मणवधे पापस्य गुरुत्वं, प्रमाणाभावात् । यच्च मनुदेवलाभ्यामुक्तम्—'विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं (३)भवेत् । तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः' ॥ इति, तदपि 'प्रतिनिमित्तं नैमित्ति(४)कशास्त्रमावर्तते' इति न्यायेन द्वित्रब्राह्मणवधगोचरनैमित्तिकशास्त्रावृत्त्यनुवादेन चतुर्थे तदभावविधिपरम्, न पुनर्द्वितीयब्रह्मवधे प्रायश्चित्तानुष्ठान-

(१) किं तत्र द्वित्रिब्राह्मणवधे ट० । (२) द्वित्रिब्राह्मण ख० ।
(३) [illegible] ख० । (४) [illegible]कमावर्तते ख० ।

द्वैगुण्यविधिपर(१)मपि। वाक्यभेदप्रसङ्गात्। तस्मात् द्वित्रब्राह्मणवधेऽपि सकृदेव द्वादशवार्षिकाद्यनुष्ठानं युक्तम्, यथा 'अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपे'दित्यादिगृहदाहादिनिमित्तेषु चोदितानां क्षामवत्यादीनां युगपदनेकेष्वपि गृहदाहादिनिमित्तेषु सकृदेवानुष्ठानम्। अत्रोच्यते। न हि वचनविरोधे न्यायः प्रभवति। वचनं च विधेः प्राथमिकादित्यादिकं द्वित्रब्राह्मणवधे प्रायश्चित्तानुष्ठानावृत्तिविधिपरम्। एवं सति न्यायलभ्यतन्त्रानुष्ठानबाधेनावृत्तिविधायिदं वचनं प्रवृत्तिविशेषकरं स्यात्। इतरथा शास्त्रतः प्राप्त्यनुवादकत्वेनाऽनर्थकं स्यात्। न च वाक्यभेदः। चतुर्थादिब्रह्मवधपर्युदासेनेतरत्रावृत्त(२)प्रायश्चित्तविधानेनैकार्थत्वात्। किञ्च 'चतुर्थे नास्ति निष्कृति'रिति लिङ्गदर्शनाद्धन्यमानब्राह्मणसंख्योत्कर्षे दोषगौरवं गम्यते। तथा देवलादिवचनाच्च 'यस्त्वादनभिसन्धाय पापं कर्म सकृत्कृतम्। तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभिः' ॥ इति। न च विलक्षणयोर्गुरुलघुदोषयोः क्षयस्तन्त्रेण निष्पद्यते। अत एवंविधेषु दोषगुरुत्वेन कार्यवैलक्षण्यादपि प्रतिनिमित्तं नैमित्तिकस्यावृत्तिर्युक्ता। क्षामवत्यादिषु पुनः कार्यस्यावैलक्षण्याद्युक्तस्तन्त्रभाव इत्यलं प्रपञ्चेन। यच्चेदं 'चतुर्थे नास्ति निष्कृति'रिति तदपि महापातकविषयम्। पापस्यातिगुरुत्वेन प्रायश्चित्ताभावप्रतिपादनपरत्वात्। अतः शूद्रान्नसेवनादौ बहुशोऽभ्यस्ते तदनुगुणप्रायश्चित्तावृत्तिः कल्पनीया न पुनः प्रायश्चित्ताभावः। अत एवोक्तं मनुना (११।१४०)—'पूर्णे चान(३)स्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत्' इति। इदं च द्वादशवार्षिकं व्रतं साक्षाद्धन्तुरेव। ब्रह्महेति तस्यैवाऽभिधानात्। अनुग्राहको यत्प्रायश्चित्तभाजं पुरुषमनुगृह्णाति स तत्प्रायश्चित्तं पादोनं कुर्यात्। अतस्तस्य द्वादशवार्षिकेण पादोनं नववार्षिकं, प्रयोजकस्त्वर्धेन षड्वार्षिकं कुर्यात्। अनुमन्ता पुनः सार्धपादं सार्धचतुर्वार्षिकं, निमित्ती त्वेकपादं त्रिवार्षिकम्। अत एव सुमन्तुः—'तिरस्कृतो यदा विप्रो हत्वात्मानं मृतो यदि। निर्गुणः साहसात्क्रोधाद् गृहक्षेत्रादिकारणात् ॥ त्रैवार्षिकं व्रतं कुर्यात्प्रतिलोमां सरस्वतीम्। गच्छेद्वापि विशुद्ध्यर्थं तत्पापस्येति निश्चितम् ॥ अत्यर्थं निर्गुणो विप्रो

(१) परामिति ख० परमेव ग०।

(२) वृत्तिप्रायश्चित्त ङ०। (३) अस्थिरहितानां प्राणिनां शकटपरिमितानां वधे इत्यर्थः।

ह्यत्यर्थं निर्गुणोपरि । क्रोधाद्वै म्रियते यस्तु निर्निमित्तं तु भर्त्सितः ॥ वत्सरत्रितयं कुर्यान्नरः कृच्छ्रं विशुद्धये' ॥ इति । यदा पुनर्निमित्त(१)त्यन्तगुणवान् आत्मघाती चात्यन्तनिर्गुणस्तदैकवर्षमेव ब्रह्महत्याव्रतं कुर्यात् । 'केशश्मश्रुनखादीनां कृत्वा तु वपनं वने । ब्रह्मचर्यं चरन्विप्रो व(२)र्षेणैकेन शुध्यति' ॥ इति तेनैवोक्तत्वात् । अनयैव दिशाऽनुग्राहकप्रयोजकादीनां येऽनुग्राहकप्रयोजकादयस्तेषामपि प्रायश्चित्तं कल्प्यम् । अस्यां च कल्पनायां प्रयोजयिताऽनुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु (३)भागिनो 'यो भूय आरभते तस्मिन्फलविशेष' इत्यापस्तम्बीयं वचनं मूलम् । तथा प्रोत्साहकादीनामपि दण्डप्रायश्चित्ते कल्प्ये । यथाह पैठीनसिः—'हन्ता मन्तोपदेष्टा च तथा सम्प्रतिपादकः । प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥ आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् । उपेक्षकः शक्तिमांश्चेद्दोषवक्ताऽनुमोदकः ॥ अकार्यकारिणस्त्वेषां प्रायश्चित्तं प्रकल्पयेत् । यथाशक्त्यनुरूपं च दण्डं चैषां प्रकल्पयेत्' ॥ इति । तथा बालवृद्धादीनां साक्षात्कर्तृत्वेऽप्यर्धमेव—'अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडश । प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च' ॥ इत्यङ्गिरःस्मरणात् । तथा(४)सुमन्तुः—'अर्वाक्तु द्वादशाद्वर्षादशीतेरूर्ध्वमेव वा । अर्धमेव भवेत्पुंसां तुरीयं तत्र योषिताम्' ॥ इति । तथाऽनुपनीतस्यापि बालकस्य पादमात्रमेव प्रायश्चित्तम् । 'स्त्रीणामर्धं प्रदातव्यं वृद्धानां रोगिणां तथा । पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः' ॥ इति विष्णुस्मरणात् । अतश्च यच्छङ्खेन—'ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च । प्रायश्चित्तं चरेद्भ्राता पिता वान्यः सुहृज्जनः' ॥ इति प्रतिपाद्योक्तम्—'अतो बालतरस्यास्य नापराधो न पातकम् । राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते' ॥ इति, तदपि सम्पूर्णप्रायश्चित्ताभावप्रतिपादनपरं न पुनः सर्वात्मना तदभावप्रतिपादनपरम् । आश्रमविशेषनिरपेक्षेण श्रूयमाणेषु ब्राह्मणो न हन्तव्यस्तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदित्येवमादिष्वनपेक्षितवयोविशेषस्यैवाऽधिकारात् । अतश्च तदीयमपि प्रायश्चित्तं पित्रादिभिरेवाचरणीयम् । 'पुत्रानुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विदध्यात्' इति तस्यैव(५)

(१) गुणवदुपरि आत्मघाती घा० । (२) वर्षैकेण विशुध्यति ड० ।
(३) भागिनो भूय ख० । (४) तथार्वाक्तु ख० । (५) पुत्रहिताचरणे ख० ।

पुत्रादिहिताचरणेऽधिकृतत्वात्। यत्र पुनः कस्मिंश्चिद्ब्रह्मवधे प्रयो(१)- जकभावमापन्नस्यान्यस्मिन् साक्षात्कर्तृत्वे गुरुलघुप्रायश्चित्तसन्निपा- तस्तत्र द्वादशवार्षिकादिगुरुप्रायश्चित्तान्तःपातिनः प्रयोजकसम्बन्धि- लघुप्रायश्चित्तस्य प्रसङ्गात्कार्यसिद्धिः। न चैवं सत्याविशेषाल्लघुकल्पेन महतोऽपि सिद्धिः स्यादित्याशङ्कनीयम्। अत्र ह्यन्तःपातितयानुष्ठाने विशेषावगमात्प्रसङ्गात्कार्यसिद्धि(२)रवगम्यते। न च लघ्वन्तःपाती महाकल्प इति कुतः प्रसङ्गाशङ्का। न च चैत्रवधजनितकल्मषक्षयार्थ- (३)मनुष्ठितेन कथं विष्णुमित्रवधोत्पाद्यपापनिवृत्तिरिति वाच्यम्। चैत्राद्युद्देशस्यातन्त्रत्वात्। अतो यथा काम्यनियोगनिष्पत्त्यर्थं स्वर्गार्थं वाऽनुष्ठितैराग्नेयादिभिर्नित्यनियोगनिष्पत्तिस्तद्वल्लघुप्रायश्चित्तस्यापि कार्यसिद्धिः। यत्पुनर्मध्यमाङ्गिरोवचनम्—'गवां सहस्रं विधिवत्पा- त्रेभ्यः प्रतिपादयेत्। ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव च'॥ इति तत्सवनस्थगुणवद्ब्राह्मणविषयम्। एतच्च 'द्विगुणं सवनस्थे तु ब्राह्म- णे व्रतमादिशेत्' इत्येतद्वाक्यविहितद्विगुणद्वादशवार्षिकव्रतचर्याश- क्तस्य वेदितव्यम्। प्रायश्चित्तस्यातिगुरुत्वात्। न त्वनावृत्तद्वादश- वार्षिकविषयम्। तत्र हि द्वादशदिनान्येकैकप्राजापत्यमिति गणना- यां प्रजापत्यानां षष्ट्यधिकशतत्रयं भवति। यद्यपि प्राजापत्यस्यान्ते त्र्यहमुपवासोऽधिकस्तथाप्यत्र वनवासजटाधारणवन्याहारत्वादि- (४)रूपतपोविशेषयुक्तत्वादुपवासाभावेऽप्येकैकस्य द्वादशाहस्य प्राजापत्यतुल्यत्वम्। ततश्च—'प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्वि- चक्षणः। गवामभावे दातव्यं तन्मूल्यं वा न संशयः'॥ इत्यनेन न्यायेन प्रतिप्राजापत्यमेकैकस्यां धेन्वां दीयमानायां धेनूनामपि षष्ट्यधिकं शतत्रयं भवति न पुनः सहस्रम्। अतो यथोक्त एव विषयो युक्तः। यदपि शङ्खवचनम्—'पूर्ववदमतिपूर्वं चतुर्षु वर्णेषु विप्रं प्रमाप्य द्वादशवत्सरान् षट् त्रीन् सार्धं संवत्सरं च व्रतान्यादिशे- त्तेषामन्ते गोसहस्रं तदर्धं तस्यार्धं तदर्धं च दद्यात्सर्वेषां वर्णानामानु- पूर्व्येणे'ति द्वादशवार्षिकगोसहस्रयोः समुच्चयविधि(५)परं तदाचा- र्यादिहननविषयं द्रष्टव्यम्। तस्यातिगुरुत्वात्। तथा च दक्षः— 'सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। आचार्ये शतसाहस्रं श्रो-

(१) प्रयोजकाभावापन्न ठ०। (२) सिद्धिरुच्यते ठ०। (३) मनुष्ठेयेन ख०।
(४) रूपतया विशेष। (५) समुच्चयपरं ख०।

स्यासावसम्पूर्णेऽपि द्वादशवार्षिके शुद्ध्येत् । यद्यपि प्राणत्राणे प्रवृत्त-स्तदकृत्वैव म्रियते तथापि शुद्ध्यत्येव । अत एव मनुना (११।७९)—'ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजन् । मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च' ॥ इति । ब्राह्मणरक्षणं तदर्थं मरणं च पृथगु-पात्तम् । तथा परकीयाश्वमेधावभृथाख्यकर्माङ्गभूतस्नानसमये स्व-यमपि स्नात्वा ब्रह्महत्यायाः शुद्धिं प्राप्नुयात् । (१)स्नानं च स्वक-ल्मषं विख्याप्य कुर्यात् । तथा च मनुः (११।९२)—'शिष्ट्वा वा भूमि-देवानां नरदेवसमागमे । स्वमेनोऽवभृथे स्नात्वा हयमेधे वि(२)मु-च्यते' ॥ इति । भूमिदेवा ब्राह्मणा ऋत्विजस्तेषां नरदेवेन यजमानेन राज्ञा समवाये स्वीयमेनः शिष्ट्वा विख्याप्याऽश्वमेधावभृथे स्ना(३)-त्वा शुध्यति यदि तैरनुज्ञातो भवति । 'अश्वमेधावभृथं गत्वा तत्रा-नुज्ञातः स्नातः सद्यः पूतो भवति' इति शङ्खस्मरणात् । अश्वमेधा-वभृथग्रहणमग्निष्टुन्मध्यानां पञ्चदशरात्रादिक्रत्वन्तराणामग्निष्टुत्स-त्रासिकानां वा सर्वमेधादीनामुपलक्षणम् । 'अश्वमेधावभृथे वाऽन्यय-ज्ञेऽप्यग्निष्टुदन्तश्चेत्' इति गौतमस्मरणात् । अयं च प्रक्रान्तद्वादश-वार्षिकस्य कथञ्चित् ब्राह्मणप्राणत्राणादिकं कुर्वतो व्रतसमाप्त्यवधि-रुच्यते । यथा सारस्वते सत्रे प्लाक्षं प्रस्रवणं प्राप्योत्थानमृषभैक-शतानां वा गवां सहस्रमभावे सर्वस्व(४)दान गृहपतिमरणे चेति । न पुनः स्वतन्त्रं प्रायश्चित्तान्तरम् । तथा च शङ्खः—'द्वादशे वर्षे शुद्धिं प्राप्नोत्यन्तरा वा ब्राह्मणं मो(५)चयित्वा, गवां द्वादशानां परित्राणात्सद्य एवाऽश्वमेधावभृथस्नानाद्वा पूतो भवति' इति । अत एव मनुना ( ११।७८ )—'कृतवापनो वा निवसेत्' इति द्वादशवा-र्षिकस्य गुणविधिं प्रक्रम्य । ( ११।७९ )—'ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजेत् । मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च'॥ इत्यादिना मध्ये ब्राह्मणत्राणादिकमभिधाय (११।८१)—'एवं दृढ-व्रतो नित्यं ब्रह्मचारी समाहितः । समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्य-पोहति' ॥ इति द्वादशवार्षिकमेवोपसंहृतम् । ननु ब्रह्महत्यायाः शुद्धिं प्राप्नुयादिति ब्राह्मणत्राणादीनां द्वादशवार्षिकेण सहैकफलत्वावग-मात्स्वातन्त्र्यमेव युक्तं न पुनरङ्गत्वम् । किञ्च प्रधानविरोधित्वादपि

(१) स्नाने च ख० । (२) विशुध्यति ङ० । (३) स्नात्वा शुध्येव ख० ।
(४) सर्वस्वजान्यां, सर्वस्वयाज्यान्यां ङ० । (५) मोजयित्वा ङ० ।

ग्राहक ह्यङ्गं भवति । न च प्रारब्धद्वादशवार्षि-
येन तत्कार्यं विधानं गम्यते । यथा 'सत्रायाऽव-
जेत' इति सत्रप्रयोगप्रवृत्तस्य तत्परिसमापना-
द्वधानमतोऽपि स्वातन्त्र्यमेवं युक्तम् । यथाग्निप्र-
नाम् । न च तेषामपि द्वादशवार्षिकोपक्रमोपसंहा-
तदङ्गत्वमिति शङ्कनीयम् । यतः सत्यपि मध्यपाठे
त्वेन प्रयोजनाकांक्षाविरहान्न परस्परमङ्गाङ्गित्वं युक्त-
मिधनीप्रकरणमध्य(१)वर्तिनां निर्वित्पदानामग्निसमि
न सामिधेनीभिः सहैककार्याणां न सामिधेन्यङ्गत्वम् ।
ऽग्निप्रवेशादीनां द्वादशवार्षिकमध्ये पाठे, वसिष्ठगोत-
तां द्वादशवार्षिकप्रक्रमात्प्रागेव पठितत्वात् । इदमेव स्वा-
कटयितुं मनुना (११।७३)—'लक्ष्यं शस्त्रभृतां वा स्यात्प्रा-
तनमग्नौ वा' इति प्रतिवाक्यं वाशब्दः पठितः । तथा प्रति-
त्तमेवोपसंहृतम् ( मनुः ११।८६ )—'अतोऽन्यतममास्थाय
विप्रः समाहितः । ब्रह्महत्याकृतं पापं व्यपोहत्यात्मशुद्धये' ॥
। अतोऽग्निप्रवेशादीनां स्वातन्त्र्यमेव युक्तम् । अतश्च ब्राह्मण-
दिरप्येकफलत्वान्नाङ्गत्वमिति । उच्यते—परिहृतमेतत्, 'अन्तरा
ह्मणं मोचयित्वे'त्यादिना शङ्खवचनेनाऽङ्गत्वावगमात् । अङ्गस्यैव
तः प्रधानद्वारेण फलसम्बन्धः । न च प्रधानविरोधः, यतो ब्राह्मण-
त्राणावधिकस्यैव व्रतानुष्ठानस्य फलसाधनत्वं विधीयत इति न
विरोधः ॥ २४४ ॥

( मिता० ) किञ्च—

दीर्घेति । दीर्घेण बहुकालव्यापिना तीव्रेण दुःसहेनामयेन कुष्ठा-
दिव्याधिना ग्रस्तं पीडितं ब्राह्मणं गां वा तथाविधां पथि दृष्ट्वा नि-
रातङ्कं नीरुजं कृत्वा ब्रह्महा शुचिर्भवति । ननु ब्राह्मणस्य परित्राणा-
दित्यत्र यदुक्तं ब्राह्मणरक्षणं तदेव किमर्थं पुनरुच्यते ब्राह्मणं गाम-
थापिवेति । सत्यमेवम् । किन्त्वात्मप्राणपरित्यागेनाधस्तनवाक्ये ब्रा-
ह्मणरक्षणमुक्तमधुना पुनरौषधदानादिनेति विशेषः । अमुनैवाऽभि-
प्रायेणोक्तं मनुना (११।८०)—'विप्रस्य तन्निमित्ते वा प्राणलाभे विमु-
ति ॥ २४५ ॥

( मिता० ) किञ्च—

आनीयेति । विप्रस्यापहृतसर्वस्वतयाऽवसीदतः सम्बन्धि द्रव्यं [हि]रण्यादिकं चौरैर्हृतं साकल्येनानीय रक्षणं यः करोति स विशु[ध्य]ति । आनयने प्रवृत्तः स्वयं चौरैर्घातितो वा यदि वा तन्निमित्तं [ब्रा]ह्मणसर्वस्वानयनार्थं तत्र युध्यमानः शस्त्रैः क्षतो मृतकल्पो जीव[न्न]पि विशुध्यति । शस्त्रैरिति बहुवचनं क्षतबहुत्वप्राप्त्यर्थम् । अत [ए]व मनुना ( ११।८० )—‘(१)त्र्यवरं प्रतिरोद्धा वा सर्वस्वमवजित्य [व]ा’ इति त्र्यवरग्रहणं कृतम् । एतस्य श्लोकद्वयोक्तकल्पपञ्चकस्य ब्रा[ह्म]णरक्षणरूपकत्वेनान्तरा वा ब्राह्मणं मोचयित्वेत्यनेन शङ्खवचनेन [क्र]ोडीकृतत्वात् द्वादशवार्षिकसमासव्यवधित्वेनेतरग्रहणे विनियोगान्न [स्]वातन्त्र्यम् ॥ २४६ ॥

( मिता० ) प्रायश्चित्तान्तरमाह—

लोमभ्य इति । लोमभ्यः स्वाहेत्येवमादिभिर्मन्त्रैर्लोमप्रभृतिम[ज्]जान्तां तनुं जुहुयात् । इतिशब्दः करणत्वनिर्देशार्थं । एवंशब्दः प्र-कारसूचनार्थः । हिशब्द स्मृत्यन्तरप्रसिद्धत्वगादीनां प्रभृतिशब्देना-क्षिप्यमाणानां द्योतनार्थः । ततश्च लोमादीनि होमद्रव्याणि चतुर्थ्या निर्दिश्यन्ते स्वाहाकारं पठित्वा तैर्मन्त्रैर्जुहुयात् । ते च हूयमानद्र-व्याणां लोमत्वग्लोहितमांसमेदःस्नाय्वस्थिमज्ज्ञानामष्टसंख्यत्वादष्टौ मन्त्रा भवन्ति । तथा च वसिष्ठः—‘ब्रह्महा(२)ग्निमुपसमाधाय जुहु-याल्लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वाशय इति प्रथमाम् । १ । त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वाशय इति द्वितीयाम् । २ । लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं वाशय इति तृतीयाम् । ३ । मांसानि मृत्योर्जुहोमि मांसैर्मृत्युं वाशय इति चतुर्थीम् । ४ । मेदो मृत्योर्जुहोमि मेदसा मृत्यु वाशय इति पञ्चमीम् । ५ । स्नायूनि मृ-त्योर्जुहोमि स्नायुभिर्मृत्युं वाशय इति षष्ठीम् । ६ । अस्थीनि मृत्यो-र्जुहोमि अस्थिभिर्मृत्युं वाशय इति सप्तमीम् । ७ । मज्ज्ञां मृत्योर्जुहो-मि मज्ज्ञाभिर्मृत्यु वाशय इत्यष्टमीम् । ८ ।’ इति । अत्र च लोमप्रभृति-तनुं जुहुयादिति लोमादीनां होमद्रव्यत्वावगमाल्लोमभ्यः स्वाहेति स-त्यपि चतुर्थीनिर्देशे लोमादीनां न देवतात्व कल्प्यते । द्रव्यप्रकाश-नेनैव मन्त्राणां होमसाधनत्वोपपत्तेः । किन्तु लोमभिर्मृत्युं वाशय इ-

(१) त्रिवार क० । (२) भ्रूणहाग्निमिति पाठान्तरम् ।

त्यादिवसिष्ठमन्त्रपर्यालोचनया मृत्योरेव हविःसम्बन्धावगमाद्देव-नात्वं कल्प्यते। अतश्च लोमादीनि सामर्थ्यात्स्वधितिनावदाय मृत्यूद्देशेनाष्टौ होमान् कृत्वाऽन्ते तनुं प्रक्षिपेत्। अतो यत्कैश्चिदुक्तमनादिष्टद्रव्यत्वा(१)दाज्यहविष्का होमा इति, तदनिरूप्यैवोक्तमित्युपेक्षणीयम्। जुहुयादित्यनेनाग्नौ सिद्धे भ्रूणहाग्निमुपसमाधायेति पुनराग्निग्रहणं लौकिकाग्निप्राप्त्यर्थम्। युक्त चैतत्। पतिताग्नीनां प्रतिपत्तिविधानात्। 'आहिताग्निस्तु यो विप्रो महापातकभाग्भवेत्। प्रायश्चित्तैर्न शुध्येत तदग्नीनां तु का गति ॥ वैतानं प्रक्षिपेत्तोये शालाग्निं शमयेद् बुधः' ॥ इत्युशनःस्मरणात् । तथा—'महापातकसंयुक्तो दैवात्स्यादग्निमान्यदि। पुत्रादिः पालयेदग्नीन्युक्तश्चादोषसंक्षयात् ॥ प्रायश्चित्तं न कुर्याद्यः कुर्वन्वा म्रियते यदि। (२)गृह्यं निर्वापयेच्छ्रौतमभ्यस्वस्येत्सपरिच्छदम' ॥ इति कात्यायनस्मरणात् । तनुप्रक्षेपश्चोत्थायोत्थाय त्रिरधोमुखेन कर्तव्यः। यथाह मनुः (११।७३)—'प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः' इति । गौतमेनाप्यत्र विशेषो दर्शितः—'प्रायश्चित्तमग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवच्छातस्य' इति। अवच्छातस्य अनशनकर्शितकलेवरस्येत्यर्थः। तथा च काठकश्रुतिः—'अनशनेन कर्शितोऽग्निमारोहेत्' इति। इदं च मरणान्तिकं प्रायश्चित्तं कामकारविषयम्। यथाह मध्यमाङ्गिराः—'प्राणान्तिकं च यत्प्रोक्तं प्रायश्चित्तं मनीषिभिः । तत्कामकारविषयं विज्ञेय नात्र संशयः' ॥ इति। तथा—'यः कामतो महापाप नरः कुर्यात्कथञ्चन। न तस्य शुद्धिर्निर्दिष्टा भृग्वाग्निपतनादृते' ॥ इति। एतच्च प्रायश्चित्तं स्वतन्त्रमेव न ब्राह्मणत्राणादिवत् द्वादशवार्षिकान्तर्भूतमित्युक्तं प्राक् ॥ २४७ ॥

( मिता० ) किञ्च—

संग्रामे इति। अथवा संग्रामे युद्धभूमावुभयबलप्रेरितशरसम्पातस्थाने लक्ष्यभूतो मृतः शुद्धिमवाप्नुयात्। गाढमर्मप्रहारजनिततीव्रवेदनो मृतकल्पो मूर्च्छितो जीवन्नपि विशुध्यति। लक्ष्यभावश्च प्रायश्चित्ती अयमित्येवं विदुषां धनुर्विद्याविदां सग्रामे स्वेच्छया कर्तव्यो न तु राज्ञा बलात्कारयितव्यः। यथाह मनुः ( ११।१७ )—'लक्ष्य शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मन ' इति। इदं च मरणा-

(१) हविष्कामो होम इति ख०। (२) गृह्य ना निर्वपेच्छ्रौत ख।

न्तिकत्वात्साक्षात्कर्तुः क्षत्रियस्य कामकारविषयम् । अपिशब्दादश्वमेधादिनापि विशुध्यति । यथाह मनुः ( ११।७४ )—'यजेत वाश्वमेधेन स्वर्जिता गोसवेन च । अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा' ॥ इति । अश्वमेधानुष्ठानं सार्वभौमक्षत्रियस्यैव । 'यजेत वाश्वमेधेन क्षत्रियस्तु महीपतिः' इति पराशरस्मरणात् । नासार्वभौमो यजेतेत्यसार्वभौमस्य प्रतिषेधदर्शनाच्च । इदं चाश्वमेधानुष्ठानं सार्वभौमस्य कामकारकृते मरणान्तिकस्थाने द्रष्टव्यम् । 'महापातककर्तारश्चत्वारो मतिपूर्वकम् । अग्निं प्रविश्य शुद्ध्यन्ति स्थित्वा वा महति क्रतौ' ॥ इति यमेन मरणकालाग्निप्रवेशतुल्यतया महाक्रतोरश्वमेधस्य निर्दिष्टत्वात् । स्वर्जिदादयश्च त्रैवर्णिकस्याहिताग्नेरिष्टप्रथमयज्ञस्य द्वादशवार्षिकेण सह विकल्पन्ते । न च स्वर्जिताद्यर्थमाधानं प्रथमयज्ञानुष्ठानं वा कार्यम् । पतितस्य द्विजातिकर्मस्वनधिकारात् । न च सन्ध्योपासनवदविरोध इति युक्तम् । आधानादेरुत्तरक्रतुशेषत्वाभावात् । ते च दक्षिणान्यूनाधिक्याश्रयणेन (१)द्वादशवार्षिकाद्यर्हेषु साक्षाद्धन्त्रादिषु व्यवस्थापनीयाः ॥ २४८ ॥

( मिता० ) किञ्च—

अरण्य इति । अरण्ये निर्जनप्रदेशे नियतो नियताहारः ( ११।७७ )—'जपेद्वा नियताहारः' इति मनुस्मरणात् । त्रिवारं मन्त्रब्राह्मणात्मकं वेदं जपित्वा शुद्ध्यति । संहिताग्रहणं पदक्रमव्युदासार्थम् । यद्वा मिताशनो भूत्वा प्लाक्षात्प्रस्रवणादारभ्य पश्चिमोदधेः प्रतिस्रोतः स्रोतःस्रोतः प्रति सरस्वतीम् इत्वा गत्वा विशुध्यति । अशनं च हविष्येण कार्यम् (११।७७)—'हविष्यभुग्वानुचरेत्प्रतिस्रोत सरस्वतीम्' इति मनुस्मरणात् । अयं च वेदजपो विदुषो हन्तुर्निर्धनस्यात्यन्तगुणवतो निर्गुणव्यापादने प्रमादकृते द्रष्टव्यः । सरस्वतीगमनं तु तादृश एव विषये विद्याविरहिणो द्रष्टव्यम् । निमित्तिनश्च—'तिरस्कृतो यदा विप्रो निर्गुणो म्रियते यदि' इति सुमन्तुवचनस्य दर्शितत्वात् । यत्पुनर्मनुवचनम् ( ११।७५)—'जपित्वान्यतम वेदं योजनानां शतं व्रजेत्' इति, तदप्यरण्ये नियतो जप्त्वेत्येतस्यैव विषयेऽशक्तस्य द्रष्टव्यम् ॥ २४९ ॥

---

( १ ) द्वादशवार्षिकषड्वार्षिकत्रैवार्षिकादिषु साक्षाद्धन्त्रादिषु ह० ।

( मिता० ) किञ्च—

पात्र इति । न विद्यया केवलयेत्याशुक्तलक्षणे पात्रे गोभूहिरण्यादिकं जीवनपर्याप्तं समर्थं धनं दत्त्वा शुद्धिमवाप्नुयात् । तद्धनं यः प्रतिगृह्णाति तस्य वैश्वानरदैवत्येष्टिः शुद्ध्यर्थं कर्तव्या । एतच्चाहिताग्निविषयम् । अनाहिताग्नेस्तु तद्दैवत्यश्चरुर्भवति । य एवाहिताग्नेर्धर्मः स एवौपासनिकस्येति गृह्यकारवचनात् । वाशब्दात्सर्वस्वं सपरिच्छदं वा गृहं दद्यात् । यथाह मनुः ( ११।७६ )—'सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् । धनं वा जीवनायालं गृहं वा सपरिच्छदम्' ॥ इति । इदं च पात्रे धनदानं निर्गुणस्य धनवतो हन्तुर्निर्गुणव्यापादने द्रष्टव्यम् । तत्रैव विषये अविद्यमानान्वयस्य सर्वस्वदानं सान्वयस्य तु सोपस्करगृहदानमिति व्यवस्था । यदपि पराशरेणोक्तम्—'चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके । समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥ सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात्समाहरेत् । वर्जयित्वा विकर्मस्थाञ्छत्रोपानद्विवर्जितः ॥ अहं दुष्कृतकर्मा वै महापातककारकः । गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥ गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च । तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥ एतेषु ख्यापयेदेनः पुण्यं गत्वा तु सागरम् । (१)ब्रह्महापि प्रमुच्येत स्नात्वा तस्मिन्महोदधौ ॥ ततः पूतो गृहं प्राप्य कृत्वा ब्राह्मणभोजनम् । दत्त्वा वस्त्र पवित्राणि पूतात्मा प्रविशेद् गृहम् ॥ गवां वापि शतं दद्याच्चातुर्विद्याय दक्षिणाम् । एवं शुद्धिमवाप्नोति चातुर्विद्यानुमोदितः' ॥ इति । तदपि पात्रे धनं वा पर्याप्तमित्यनेन समानविषयम् । यच्च सुमन्तुवचनम्—'ब्रह्महा संवत्सरं कृच्छ्रं चरेदधःशायी त्रिषवणी कर्मावेदको भैक्षाहारो दिव्यनदीपुलिनसङ्गमाश्रमगोष्ठपर्वतप्रस्रवणतपोवनविहारी स्यात् स्थानवीरा(२)सनी संवत्सरे पूर्णे हिरण्यमणिगोधान्यतिलभूमिसर्पींषि ब्राह्मणेभ्यो ददत्पूतो भवति' इति तदपि हन्तुर्मूर्खस्य धनवतो जातिमात्रव्यापादने द्रष्टव्यम् । यत्पुनर्वसिष्ठवचनम्—'द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत्' इति तन्मनसाऽध्यवसितब्रह्महत्यस्य स्वत एवोपरतजिघांसस्य वेदितव्यम् । यत्पुनः—'षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् । चान्द्रायणं वा कुर्वीत पराकद्वयमेव च' ॥ इति षट्त्रिंशन्मत-

( १ ) मच्यते दिवमुच्येत इ० । ( २ ) वीरासनेन संवत्सरे इ० ।

वचनं तदप्रत्यानेयपुंस्त्वस्य सप्रत्ययवधे द्रष्टव्यम् । अत्रैव विषये अप्रत्ययवधे बृहस्पतिराह—'अरुणायाः सरस्वत्याः सङ्गमे लोकविश्रुते । शुध्येत्त्रिषवणस्नायी त्रिरात्रोपोषितो द्विजः' ॥ इति । एवमन्यान्यपि स्मृतिवचनान्यन्विष्य विषमाणां व्यवस्था विज्ञेया । समानां तु विकल्पः । एतानि च द्वादशवार्षिकादिधनदानपर्यन्तानि ब्राह्मणस्यैव । क्षत्रियादेस्तु द्विगुणादिकम् । यथाहाङ्गिराः—'पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता । वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम्' ॥ इति । एवं च ब्राह्मणानां येन हन्तृहन्यमानगतगुणविशेषेण यः प्रायश्चित्तविशेषो व्यवस्थितः स एव तद्गुणविशिष्टे क्षत्रियादौ हन्तरि द्विगुणस्त्रिगुणो वेदितव्यः । अनयैव दिशा क्षत्रियवैश्यादावपि हीनेनोत्कृष्टवधे दोषगौरवात्प्रायश्चित्तस्यापि द्वैगुण्यादि कल्पनीयम् । दोषगौरवं च दण्डगौरवादवगम्यते । यथोक्तम्—'प्रतिलोमापवादेषु द्विगुणस्त्रिगुणो दमः । वर्णानामानुलोम्ये च तस्मादर्धार्धहानितः' ॥ इति । यत्तु चतुर्विंशतिमतवचनम्—'प्रायश्चित्तं यदाम्नात ब्राह्मणस्य महर्षिभिः । पादोनं क्षत्रियः कुर्यादर्धं वैश्यः समाचरेत् ॥ शूद्रः समाचरेत्पादमशेषेष्वपि पाप्मसु' । इति, तत्प्रतिलोमानुष्ठितचतुर्विधसाहसव्यतिरिक्तविषयम् । तथा मूर्धावसिकादीनामप्यनुलोमोत्पन्नानां दण्डवत्प्रायश्चित्तमूहनीयम् । दर्शितं दण्डतारतम्यम्—'दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः' इति । ततश्च मूर्धावसिक्तस्य ब्राह्मणवधे ब्राह्मणादतिरिक्तं क्षत्रियान्न्यूनमध्यर्धं द्वादशवार्षिकं भवति । अनयैव दिशा प्रतिलोमोत्पन्नानामपि प्रायश्चित्तगौरवमूहनीयम् । तथा आश्रमिणामपि अङ्गिरसा विशेषो दर्शितः—'गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि । शौचवच्छोधनं कुर्युरर्वाग्ब्रह्मनिदर्शनात्' । इति । शौचवदिति 'एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम्' ॥ इति वचनाद्यथा शौचं द्वैगुण्यादिक्रमेण वर्धते तथा शोधनं प्रायश्चित्तमपि भवतीत्यर्थः । ब्रह्मचारिणस्तु प्रायश्चित्तद्वैगुण्यं षोडशवर्षादूर्ध्वमेव । अर्वाक्तु पुनः 'बालो वाप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति' इति षोडशवर्षादर्वाचीनस्यार्धप्रायश्चित्ताभिधानात् । न च द्वादशवार्षिके चतुर्गुणे क्रियमाणे मध्ये विपत्तिशङ्कया समाप्त्यनुपपत्तेः प्रवृत्तिरेव नोपपद्यत इति शङ्कनीयम् । यतः प्रक्रान्तप्राय-

श्चित्तस्य मध्ये विपत्तावपि पापक्षयो भवत्येव । यथाह हारीतः—'प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते । पूतस्तदहरेवासाविह लोके परत्र च' ॥ इति । व्यासोऽप्याह—'धर्मार्थं यतमानस्तु न चेच्छक्नोति मानवः । प्राप्तो भवति तत्पुण्यमत्र वै नास्ति संशयः' ॥ इति २५०॥

( वी०मि० ) ब्रह्मवधादिप्रायश्चित्तं प्राणान्तिकं भिन्नं ग्रन्थलाघवेनाऽत्रैव क्षत्रियादिविशेषवधेऽप्याह—

यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रतम् ॥
गर्भहा च यथावर्णं तथात्रेयीनिषूदकः ॥ २५१ ॥

यागस्थयोर्दीक्षितयोः क्षत्रियवैश्ययोरन्यतरस्य हन्तुर्ब्रह्मघ्नव्रततुल्यं व्रतं चरेत् । गर्भहन्ता पुष्पोद्गमानन्तरं षोडशदिनमध्ये ऋतुमतीहन्ता च यथावर्णं यद्वर्णवधे यत्प्रायश्चित्तं तच्चरेदित्यर्थः । तथापदेन साक्षादिति, चकारेण वाकारेण च कामकृतेऽर्धमिति लभ्यते ॥ २५१ ॥

( मिता० ) अधुना निमित्तान्तरेषु ब्रह्महत्याप्रायश्चित्तस्यातिदेशमाह—

यागस्थेति । दीक्षणीयाद्युदवसानीयापर्यन्ते सोमयागप्रयोगे वर्तमानौ क्षत्रियवैश्यौ यो व्यापादयति असौ ब्रह्महणि पुरुषे यद्ब्रह्महत्याव्रतमुपदिष्टं द्वादशवार्षिकादि तच्चरेत् । यद्यपि यागशब्दः सामान्यवचनस्तथाप्यत्र सोमयागमभिधत्ते । 'सवनगतौ च राजन्यवैश्यौ' इति वसिष्ठेन सवनत्रयसम्पाद्यस्य सोमयागस्यैव निर्दिष्टत्वात् । अत्र च गुरुलघुभूतानां द्वादशवार्षिकादिब्रह्महत्याव्रतानां जातिशक्तिगुणाद्यपेक्षया प्रागुक्तवद्व्यवस्था वेदितव्या । एवं गर्भवधादिष्वपि । मरणान्तिकं तु नातिदिश्यते, व्रतग्रहणात् । अतः कामतो यागस्थक्षत्रियादिवधे व्रतस्यैव द्वैगुण्यम् । एतच्च व्रतं सम्पूर्णमेव कर्तव्यम् । पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वेति प्रक्रम्याऽऽपस्तम्बेन द्वादशवार्षिकाभिधानात् । गर्भे च विप्रासु सम्भूतं हत्वा यथावर्णं यद्वर्णपुम्वधे यत्प्रायश्चित्तमुक्तं तद्वर्णगर्भवधे तच्चरेत् । एतच्चानुपजातस्त्रीपुनपुंसकव्यञ्जनगर्भविषयम् । (११-८७)—'हत्वा गर्भमविज्ञातम्' इति मानवे विशेषदर्शनात् । अत्र च यद्यपि ब्राह्मणगर्भस्य ब्राह्मणत्वादेव तद्वधनिमित्तव्रतप्राप्तिस्तथापि स्त्रीत्वस्यापि सम्भवात्स्त्री-

शूद्रविट्क्षत्रवध इत्युपपातकत्वेन तत्प्रायश्चित्तप्राप्तिरपि स्यादतः स्त्री-पुंनपुंसकत्वेनाविज्ञातेऽपि ब्राह्मणगर्भत्वमात्रप्रयुक्तं ब्रह्महत्याव्रतं कुर्यादित्यर्थवदतिदेशवचनम् । उपजाते स्त्रीपुंसादिविशेषव्यञ्जने यथा यथमेव प्रायश्चित्तम् । यश्चात्रेय्या निषूदको व्यापादकः सोपि तथा-व्रतं चरेत् । हन्यमानात्रेयीवर्णानुरूपं व्रतं चरेदित्यर्थः । आत्रेयी-शब्देनर्तुमत्युच्यते । 'रजस्वलामृतुस्नातामात्रेयीमाहुर्यत्र ह्येतदपत्यं भवति' इति वसिष्ठस्मरणात् । अत्रिगोत्रजा च । 'अत्रिगोत्रां वा नारीम्' इति विष्णुस्मरणात् । एतदुक्तं भवति । ब्राह्मणगर्भवधे ब्राह्मण्यात्रेयीवधे च ब्रह्महत्याव्रतम् । क्षत्रियगर्भवधे क्षत्रियात्रेयीवधे च क्षत्रहत्याव्रतमेवमन्यत्रापीति । चशब्दात्साक्ष्ये अनृतवचनादिष्वपि । तथाह मनुः (११।८८)—'उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा । अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम्' ॥ इति । यत्र व्यवहारे असत्यवचनेन प्राणिनां वधप्राप्तिस्तद्विषयमेतत् । प्रायश्चित्तस्याति-गुरुत्वात् । प्रतिरोधः क्रोधावेशः । निक्षेपश्च ब्राह्मणसम्बन्धी । स्त्री चाहिताग्निभार्या पतिव्रतात्वादिगुणयुक्तोच्यते सवनस्था च । यथा-हाङ्गिरा —'आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम् । ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च' ॥ इति । 'सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत्' । इति पराशरस्मरणात् । एवं च सवनस्थाग्निहोत्रि-ण्यात्रेयीवधे ब्रह्महत्याप्रायश्चित्तातिदेशात्तद्व्यतिरिक्तस्त्रीवधस्य स्त्री-शूद्रविट्क्षत्रवध इत्युपपातकमध्यपाठादुपपातकत्वमेव । ननु 'ब्राह्मणो न हन्तव्य' इत्यत्र निषेधेऽनुपादेयगतत्वेन लिङ्गवचनयोरविव-क्षितत्वाद्ब्राह्मणजातेश्च स्त्रीपुंसयोर(१)विशेषात्तदतिक्रमनिमित्तप्रा-यश्चित्तविधेर्ब्रह्महा द्वादशाब्दानीत्यस्योभयत्र प्राप्तत्वात्किमर्थं तथा-त्रेयीनिषूदक इत्यतिदेशवचनम् । उच्यते—सत्यपि ब्राह्मणत्वेऽनात्रे-य्या वधस्य च महापातकप्रायश्चित्तनिराकरणार्थमतस्तस्योपपातकम-ध्यपाठादुपपातकप्रायश्चित्तमेव । आतिदेशिकेषु च प्रायश्चित्तस्यैवा-तिदेशो न पातित्यस्य । अत. पतितत्यागादिकार्य(२)मत्र न भवति२५१॥

(वी०मि०) ब्रह्मवधार्थं यागस्थक्षत्रियवधार्थं च प्रवृत्तस्य वधा-निष्पत्तौ प्रायश्चित्तमाह—

चरेद्व्रतमहत्वाऽपि घातार्थं चेत्समागतः ॥

---

(१) राविपर्ययात ड० । (२) कार्यमात्र ड० ।

घातार्थं ब्राह्मणादिर्यद्यागतस्तदा दैवादहत्वाऽपि व्रतं चरेदित्यर्थः । व्रतं चाऽत्र निमित्ततोऽभिहितं त्रैवार्षिकं काण्डादिना क्षते जाते । अन्यथा तु 'शरप्रक्षेपमात्रे वार्षिकं व्रतम्, अज्ञानतस्तु तदर्धं मानसव्यापारमात्रे द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत्' इत्यापस्तम्बोक्तव्रतमिति भवदेव । इह च व्रतमपीत्यन्वयेन व्रतान्यत्व लभ्यते ॥

द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत् ॥ २५२ ॥

( वी०मि० ) सवनस्थे सोमयागं कुर्वाणे ब्राह्मणे कामतो हते द्वादशवार्षिकं व्रतं द्विगुणमादिशेत् । तुशब्देन कामकृते सवनस्थब्राह्मणवधे द्विगुणप्रायश्चित्तव्यवच्छेदः । मरणस्य द्वैगुण्यासम्भवादिति दिक् ॥ २५२ ॥

( मिता० ) किञ्च—

चरेदिति । यथावर्णमित्यनुवर्तते । ब्राह्मणादिहनने कृतनिश्चयस्तद्व्यापादनार्थं सम्यगागत्य शस्त्रादिप्रहारे कृते कथञ्चित्प्रतिघातादिप्रतिबन्धवशादसौ न मृतस्तदा अहत्वापि यथावर्णं ब्रह्महत्यादि व्रत चरेत् । तथा च गौतमः—'सृष्टश्चेद्ब्राह्मणवधे अहत्वापि' इति । ननु हनने तदभावे चैकप्रायश्चित्तता न युक्ता । सत्यम् । अत एवौपदेशिकेभ्यो न्यूनत्वादातिदेशिकानां पादोनान्येव ब्रह्महत्यादिव्रतानि द्वादशवार्षिकादीनि भवन्ति । एतच्च प्रपञ्चितं प्राक् । किञ्च—यस्तु सवनसम्पाद्यं सोमयागमनुतिष्ठन्तं ब्राह्मण व्यापादयति तस्मिन्द्वादशवार्षिकादिव्रतं द्विगुणं समादिशेत् । तेषां च व्रतानां गुरुलघुभूतानां जातिशक्तिगुणाद्यपेक्षया सत्यपि सवनस्थत्वस्याविशेषे पूर्ववदेव व्यवस्थाऽवगन्तव्या । ब्रह्महत्यासमानां तु गुर्वधिक्षेपादीनामातिदेशिकेभ्योऽपि न्यूनत्वादर्धोनं द्वादशवार्षिकादि प्रायश्चित्तमित्युक्तम् ॥ २५२ ॥

इति ब्रह्महत्याप्रायश्चित्तप्रकरणम् ।

---

( वी०मि० ) अथ क्रमप्राप्तं सुरापानप्रायश्चित्तमाह—

सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम् ॥
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥२५३॥
वालवासा जटी वापि ब्रह्महत्याव्रतं चरेत् ॥

पिण्याकं वा कणान् वापि भक्षये(१)त्तु समा निशि ॥२५४॥
अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्रमेव च ॥
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २५५ ॥

सुरापः सुरादीनामन्यतममग्निवदत्यु(२)ष्णं पीत्वा मरणाच्छुद्धिं प्राप्नोतीत्यर्थः । पयो दुग्धम्, एतच्च कामकृते । अकामकृते त्वाह— बालेत्यादि । गोच्छागादिलोमनिर्मितवस्त्रप्रावृतो, जटाधारी, अपि-शब्दान्मुण्डी वा ब्रह्महत्याव्रतं द्वादशाब्दिकं चरेत् । अत्र—

ब्रह्महा द्वादशाब्दानि बालवासा जटी ध्वजी ।

इति संवर्तवचनात्प्राप्तस्याऽत्र विशिष्याऽभिधानाच्छिरःकपाल-धारणादिनिवृत्तिरवगम्यते । पुनः पुनः सुरापाने त्वकामकृतेऽपि मरणान्तिकमेव । 'अभ्यासेन तु सुरापोऽग्निवर्णां तां पिबेत् द्विजो वर्णात्पूतो भवतीति विज्ञायते' इति वसिष्ठवचनात् । अत्र द्विजाति-पुरस्कारेणाऽभिधानमनुपनीतसाधारणम् ।

सुरापाननिषेधस्तु जात्याश्रय इति स्थितिः ।

इति स्मरणात्—

प्रागुपनयना(३)द्बालो मद्यं मोहात्पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता पिता तथा ॥

इति वचनाच्च । अत एव 'त्रयो वर्णा' इति वक्ष्यति । 'प्रागुपनयनात्कामचारकामवादकामभक्षाः' इति गौतमवचनं तु पञ्चवर्षाभ्य-न्तरपरम् ।

मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन ।
दोषस्तु वत्स(४)रान् पञ्च ऊर्ध्वं पित्रोस्तु तद्गुरोः ॥

इति नारदवचनादिति दिक् । परन्तु—

अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो व्याधित एव च ॥

इति वचनादर्धं प्रायश्चित्तम् । एकादशवर्षादूर्ध्वं 'पादो बालेषु दा-

---

(१) भक्षयेत्त्रिसमा-इति त्रु० पु० पाठः । (२) अत्युष्ण-इति ख० पु० पाठः ।
(३) अनुपेतस्तु यो बालो-इति ख० पु० पाठ ।
(४) दोषस्त्वापञ्चमाद्वर्षादूर्ध्वं पित्रो. सुहृद्गुरोः । इति ख० पु० पाठः ।

तव्यः' इति वृद्धविष्णूक्तः पादः। तक्रादिमिश्रितेष(१)नुपलभ्यमान-रसगन्धसुरापाने त्वाह पिण्याकमिति। समा वर्षाणि त्रीणि। तिलक-ल्कं तण्डुलकणान्वा निशि भक्षयेदिति। तुशब्देन दिवाभोजनव्यव-च्छेदः, अशनान्तरस्य व्यवच्छेदश्च। अपिशब्देन वन्यमूलफलादि-विकल्पः समुच्चीयते।

कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि।

इति मनुवचनं तु तक्रादिमिश्रितानुपलभ्यमानरसगन्धसुरापान-विषयमिति देवलः। छर्दने सतीदं प्रायश्चित्तमिति तु मिताक्षरा। मुख्य-सुरापाने प्रायश्चित्तमुक्त्वा तदितरमद्यपानेऽकामकृते प्रायश्चित्तमाह अज्ञानात्त्विति। तदाह वसिष्ठः—'मद्यपाने त्वसुरायाः कृच्छ्रातिकृच्छ्रौ घृतप्राशनं पुनःसंस्कारश्चे'ति। प्रसङ्गाद्रेतःपानादौ प्रायश्चित्ताभि-धानम्। पुनःसंस्कारं पुनरुपनयनम्, पुनःपदमुपनीताभिप्रायेण। 'द्विजातय' इत्यभिधानात्। अनुपनीतस्य चोपनयनं मानान्तरसिद्ध-मेव। चकारेण—

कारयेत्पुनःसंस्कारं श(२)क्त्या विप्रांश्च भोजयेत्।

इति बृहस्पत्युक्तब्राह्मणभोजनस्य, वसिष्ठोक्तकृच्छ्रादेश्च समुच्चयः। तस्य कृच्छ्रत्रयमिति प्रागुक्तं च कामकृतमद्यपानपरमिति न विरो-धः। एवकारेण शूद्राणां प्रायश्चित्तव्यवच्छेदः॥ २५३–२५५॥

( मिता० ) अथ क्रमप्राप्तं सुरापानप्रायश्चित्तं प्रक्रमते—

सुराम्बुघृतेति। सुरादीनां मध्येऽन्यतममग्निसन्निभं क्वाथापा-दिताग्निस्पर्शदाहशक्तिकं कृत्वा पीत्वा सुरापो मरणाच्छुद्धिं प्राप्नो-ति। गोमूत्रसाहचर्याद्गव्ये एव घृतपयसी ग्राह्ये। घृतपयःसाहचर्या-च्च स्त्रैणमेव गोमूत्रम्। एतच्चार्द्रवाससा कार्यम्। 'सुराप आर्द्रवा-साश्च अग्निवर्णां सुरां पिबेत्' इति पैठीनसिस्मरणात्। तथा 'लौ-हेन पात्रेण सुरापोऽग्निवर्णां सुरामायसेन पात्रेण ताम्रेण वा पिबेत्' इति प्रचेतःस्मरणात्। एतच्च सकृत्पानमात्रे। 'सुरापानं सकृत्कृत्वा-प्यग्निवर्णां सुरां पिबेत्' इत्यङ्गिरःस्मरणात्। यत्तु वसिष्ठवचनम्—'अभ्यासे तु सुरायाश्च अग्निवर्णां पिबेद्द्विजः' इति, तत्सुराव्यतिरि-क्तमद्यपानविषयम्। एतच्च कामकारविषयम्। 'सुरापाने कामकृते

( १ ) तक्रादिमिश्रिते सत्युपलभ्य०—इति ख० पु० पाठः।
( २ ) शक्त्या—इति ख० पु० पाठः।

ज्वलन्तीं तां विनिक्षिपेत्। मुखे तया विनिर्दग्धो मृतः शुद्धिमवाप्नुयात्' ॥ इति बृहस्पतिस्मरणात्। यत्तु (११।९०)—'सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्' इति मनुना मोहग्रहणं कृतं तच्छास्त्रार्थापरिज्ञानाभिप्रायेण। अत्रेदं चिन्तनीयम्—किं सुराशब्दो मद्यमात्रे रूढ उत तिसृष्वेव गौडीमाध्वीपैष्टीष्वाहोस्वित्पैष्ट्यामेवेति। तत्र केचिन्मद्यमात्रे रूढ इति वर्णयन्ति। 'अभ्यासे तु सुरायाः' इति वासिष्ठे पैष्ट्यादित्रयव्यतिरिक्तेऽपि मद्यमात्रे सुराशब्दप्रयोगदर्शनात्। न चासौ गौणः प्रयोग इति शङ्कनीयम, मदजननशक्तिमत्त्वोपा(१)धिकतया सर्वत्र मुख्यत्वोपपत्तौ गौणत्वकल्पनाया अन्याय्यत्वादिति। तदयुक्तम्, 'पानस द्राक्ष माधूकं खार्जूरं तालमैक्षवम्। मधूत्थ सैरमारिष्ट मैरेयं नालिकेरजम्। समानानि विजानीयान्मद्यान्येकादशैव तु। द्वादश तु सुरा मद्यं सर्वेषामधमं स्मृतम्'॥ इति पुलस्त्येन मद्यविशेषत्वेन सुराया निर्दिष्टत्वात्। अतश्च मद्यमात्रे सुराशब्दप्रयोगो गौणः। अन्ये पुनः पैष्ट्यादिषु तिसृषु सुराशब्दस्य रूढिं मन्यन्ते। तथा हि—यद्यप्यनेकत्र सुराशब्दप्रयोगो दृश्यते तथापि कुत्रानादित्वमिति सन्देहे(११ ९४)—'गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा' इति मनुवचनाद्गुडमधुपिष्टविकारेष्वनादित्वनिर्धारणात्तत्रैव मुख्यत्वयुक्तम्। न चानेक(२)त्र शक्तिकल्पना दोषः। मदशक्तेरुपाधित्वाश्रयणेन तस्य सुपरिहरत्वात्। न च तालादिरसेष्वप्युपाधेर्विद्यमानत्वातिप्रसङ्गः। पङ्कजादिशब्दवद्योगरूढत्वाश्रयणात्। अतश्च—'यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः' इति तिसृणां सुराणां समानदोषत्वप्रतिपादनपरं न पुनरनयोर्गौडीमाध्व्योः पैष्टीसुरासमत्वप्रतिपादनपरम्। द्विजोत्तमग्रहणं द्विजात्युपलक्षणम्। एतदप्ययुक्तम्, 'द्वादशं तु सुरामद्यं सर्वेषामधम स्मृतम्' इति पुलस्त्यवचने गौडीमाध्वीभ्यामपि सुरामद्य(३)स्यातिरेकदर्शनात्। तथा (मनुः ११।९३)—'सुरा वै मलमन्नानां पाप्मा च मलमुच्यते' इति। अन्नविकारस्यैव सुरात्वनिर्देशादन्नशब्दस्य च 'अन्नेन व्यञ्जनम्' इत्यादिषु व्रीह्यादिविकार एव प्रयोगदर्शनाद्गुडमधुनोश्च रसरूपत्वात्तथा सौत्रामणिग्रहेषु चान्नविकार एव सुराशब्दस्य श्रुतत्वात् पैष्टयेव सुरा मुख्योच्यते।

---

(१) पाधिकत्वेन ग। (२) नेकशक्ति ह०। (३) मद्यस्य व्यतिरेक ह०।

इतरयोस्तु सुराशब्दो गौणः । यत्तूकम्—'गौडी माध्वी' इति मनुवचनाच्चिसृष्वप्यौत्पत्तिकत्वनिर्धारणेति,तदप्ययुक्तम् । यतो नेदं शब्दानुशासनवच्छब्दार्थसम्बन्धानादित्वप्रतिपादनपरं किन्तु कार्यप्रतिपादनपरम् । अतो गुणप्रायश्चित्तनिमित्ततया गौडीमाध्व्योर्गौणः सुराशब्दप्रयोग.। एवं च नानेकशक्तिकल्पना दोषो नाप्युपाध्याश्रयणं कृतम् । न चात्र द्विजोत्तमग्रहणस्योपलक्षणत्वम् । अतश्च (मनुः ११'९३)—'सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्'॥ इति पैष्ट्या एव वर्णत्रयसम्बन्धित्वेन निषेधः । गौड्यादीनां तु मद्यानां ब्राह्मणसम्बन्धित्वेनैव निषेधो न क्षत्रियवैश्ययोः । (११। ९५)—'यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद्ब्राह्मणेन नात्तव्य देवानामश्नता हवि.' ॥ इति मानवे ब्राह्मणेनेति विशेषोपादानात् । वृहद्विष्णुनापि ब्राह्मणस्यैव मद्यप्रतिषेधो दर्शितः । 'माधूकमैक्षवं सैर तालं खार्जूरपानसम् । मधूत्थं चैव माध्वीकं मैरेयं नालिकेरजम् ॥ अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु' इति । वृहद्याज्ञवल्क्येनापि क्षत्रियवैश्ययोर्दोषाभावो दर्शितः। 'कामादपि हि राजन्यो वैश्यो वापि कथञ्चन । मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते' ॥ इति । व्यासेनापि तयोर्माध्वीपानमनुज्ञातम्—'उभौ मध्वासवक्षीवावुभौ चन्दनचर्चितौ । एकपर्यङ्कशयिनौ दृष्टौ मे केशवार्जुनौ' ॥ इति । एव ब्राह्मणसम्बन्धित्वेन मद्यमात्रनिषेधे सत्यपि ( मनु.११।९४ )—'गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः' ॥ इति गौडीमाध्व्योः पृथङ्निषेधवचनं दोषगुरुत्वेन सुरासमत्वप्रतिपादनपरम् । अय च सुरानिषेधोऽनुपनीतस्यानूढायाश्च कन्याया भवत्येव । (मनुः११।९३)—'तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्' इति जातिमात्रावच्छेदेन निषेधात् । अतश्च ( ११।९० )—'सुरां पीत्वा द्विजो मोहात्' इति प्रायश्चित्तविधिवाक्ये मनुना यत् द्विजग्रहणं कृत तद्वर्णत्रयोपलक्षणार्थम् । निमित्तभूतनिषेधसापेक्षत्वान्नैमित्तिकविधेर्निषेधे च वर्णमात्रस्यावच्छेदकत्वात् । यथा 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति' इति निमित्तवाक्ये हविर्मात्राभ्युदयस्य निमित्त(१)त्वावगतौ तत्सापेक्षनैमित्तिकवाक्ये

---

( १ ) निमित्तत्वावगतौ, ङ० ।

श्रूयमाणमपि त्रेधा तन्दुलान् विभजेदिति तन्दुलग्रहणं तन्दुलादिरूप-हविर्मात्रोपलक्षणम् । इयांस्तु विशेषः—'पादो वालेषु दातव्यः सर्व-पापेष्वयं विधिः' इति वचनात्कामकारेऽपि न मरणान्तिकं किन्तु पाद मेव द्विगुणीकृत्य षड्वार्षिकं देयम् । 'विहितं यदकामानां कामात्तद्द्वि-गुणं चरेत्' इत्यङ्गिरःस्मरणात् । एवं वृद्धातुरादिष्वपि योज्यम् । तथा (११।९५)—'तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः' इति मद्यस्यापि जातिमात्रावच्छेदेन निषिद्धत्वादनुपनीतेनापि न पेयम् । ननु कथमनुपनीतस्य दोषः । 'प्रागुपनयनात्कामचारकामवादकाम-भक्षाः' इति गौतमवचनात् । तथा—'मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन । दोषस्त्वा पञ्चमाद्वर्षादूर्ध्वं पित्रोः सुहृद्गुरोः' ॥ इति कुमार-वचनाच्च दोषाभावावगतेः । उच्यते—सुरामद्ययोर्निषेधवाक्ये जा-तिमात्रत्वावच्छेदकत्वश्रवणादप्रतिहतैव निषेधप्रवृत्तिः । अत एव स्मृत्यन्तरे निषेधवचनम्—'सुरापाननिषेधस्तु जात्याश्रय इति स्थि-तिः' इति । अत. 'पादो वालेषु दातव्यः सर्वपापेष्वयं विधिः' इति । 'सर्वपापेषु सुरापानादिष्वपि' इति वचनात्पाद एव सुरापाने प्राय-श्चित्तम् । तथा जातूकर्ण्येन मद्यपानेऽपि प्रायश्चित्तम्—'अनुपेतस्तु यो वालो मद्यं मोहात्पिवेद्यदि । तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता तथा पिता' ॥ इति । अतो गौतमवचनं सुरादिव्यतिरिक्तशुक्तपर्युषि-तादिविषयम् । कुमारवचनं तु स्वल्पदोषख्यापनपरम् । अत एव प्रागुपनयनात्कृतदोषस्योपनयनमेव प्रायश्चित्तमित्युक्तं मनुना (२।२७) 'गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिवन्धनैः । वैजिकं गार्भिकं चैनो द्विजानामपमृज्यते' ॥ इति । अयमत्रार्थः—त्रैवर्णिकानामुत्पत्तिप्रभृति पैष्टीप्रतिषेधः । ब्राह्मणस्य तु मद्यमात्रनिषेधोऽप्युत्पत्तिप्रभृत्येव । राज-न्यवैश्ययोस्तु न कदाचिदपि गौड्यादिमद्यप्रतिषेधः । शूद्रस्य न सुरा-प्रतिषेधो नापि मद्यप्रतिषेधः ॥ २५३ ॥

( मिता० ) प्रायश्चित्तान्तरमाह—

वालवासा इति । गोछागादिलोमनिर्मितवस्त्रप्रावृतो वालवासाः । वालवासोग्रहणं चीरवल्कलयोरुपलक्षणार्थम् । 'सुरापगुरुतल्पगौ चीरवल्कलवाससौ ब्रह्महत्याव्रतं चरेयाताम्' इति प्रचेतःस्मरणात् । जटिग्रहणं मुण्डत्वनिराकरणार्थम् । ब्रह्महत्याव्रतं चरेदित्यनेनैव सिद्धे

यद्वालवसनादिग्रहणं तदन्यत्र सम्भ(१)वि स्वयं मारितशिरःकपाला-दिनिवृत्त्यर्थम्। इदमकामतो जलबुद्ध्या यः सुरां पिबति तद्विषयम्। (मनुः (११।८९)—'इयं विशुद्धिरुदिता प्रमाप्याऽकामतो द्विजम्' इत्यकामित्वोपाधित्वेन विहितस्यैव द्वादशवार्षिकस्यातिदेशात्। अत्र च सुरापानस्य महापातकत्वात्सत्यप्यातिदेशिकत्वे सम्पूर्णमेव द्वादशवार्षिकं कुर्यान्न पादोनम्। अत एव वृद्धहारीतः—'द्वादशभि-र्वर्षैर्महापातकिनः पूयन्ते' इति। अथवा पि(२)ण्याकं पिण्डी तं त्रि समाः वर्षत्रयपर्यन्तं रात्रौ भक्षयेत्। कणास्तन्दु(३)ललवास्तान्वा पूर्ववद्भक्षयेत्। एतच्च सकृदेव कार्यम्। (११।९२)—'कणान्वा भक्ष-क्षयेदब्दं पिण्याकं वा सकृन्निशि' इति मनुस्मरणात्। अस्य च पिण्याकादिभक्षणस्य भोजनकार्ये विहितत्वादशनान्तरपरित्यागः। एतच्चोदकबुद्ध्या सुरापाने छर्दनोत्तरकाले वेदितव्यम्। 'एतदेव व्रतं कुर्यान्मद्यपश्छर्दने कृते। पञ्चगव्यं च तस्योक्तं प्रत्यह कायशोध-नम्' ॥ इति व्यासवचनात्। न च सुरासंसृष्टेषदुपलभ्यमानतद्गन्ध-रसोदकपानविषयमिदमिति सुन्दरम्। संसर्गेऽपि सुरात्वस्यानपा-यात्। यथाऽऽज्यत्वस्य पृषदाज्ये। अत एव 'आज्यपा इति निगमाः कार्या न पृषदाज्यपाः' इत्येवमुक्तं न्यायविद्भिः। यत्पुनरापस्तम्बव-चनम्—'स्तेयं कृत्वा सुरां पीत्वा गुरुदारान्गत्वा ब्रह्महत्यां च कृत्वा चतु-र्थे कालं मितभोजनो योऽभ्युपेयात्सवनानुकल्पं स्थानासनाभ्यां विह-रंस्त्रिभिर्वर्षैः पाप व्यपनुदति' इति। यत्त्वङ्गिरोवचनम्—'महापातकसं युक्ता वर्षैः शुध्यन्ति ते त्रिभिः' इति, तदुभयमपि पिण्याकं वा कणा न्वेत्यनेनैकविषयम्। यदपि यमेन प्रायश्चित्तद्वयमुक्तम्—'बृहस्पति-सवेनेष्ट्वा सुरापो ब्राह्मणः पुनः। समत्त्व ब्राह्मणैर्गच्छेदित्येषा वैदिकी श्रुतिः॥ भूमिप्रदान यः कुर्यात्सुरां पीत्वा द्विजोत्तमः। पुनर्न च पि वेत्तां तु संस्कृतः स विशुध्यति'॥ इति, तदुभयमपि पूर्वेण सहैक-विषयम्। यद्वा अतिरिक्तदक्षिणाकल्पाश्रयणाद्द्वादशवार्षिकेण सह विकल्प्यते। अत्रापि बालवृद्धादीनां सार्धिकवर्षीयमनुपनीतानां तु नवमासिकमित्येव कल्पना कार्या। यत्तु मनुवचनम् (११।९२)—'क-णान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि। सुरापानापनुत्त्यर्थं

(१) सभने श्रूयमाणस्वसम्बन्धि स्वयं ग।

(२) पिण्याकपिण्डान् ख०। (३) तदुलाणवास्तान्वा ख०।

वालवासा जटी ध्वजी' ॥ इति, तत्तालुमात्रसंयोगे सुराया अबु-द्धिपूर्वे द्रष्टव्यम् । ननु च द्रवद्रव्यस्याभ्यवहरणं पानमित्युच्यते । अभ्यवहरणं च कण्ठादधोनयनं न तात्वादिसंयोगमात्रम् । अतः कथं तत्र पाननिमित्तं प्रायश्चित्तम् । उच्यते, येन तात्वादिसंयोगेन विना पानक्रिया न निर्वर्तते सोऽपि पानक्रियाप्रतिषेधेन प्रतिषिद्धः । अतो यद्यपि मुख्यपानाभावान्न महापातकत्वं तथापि तत्प्रतिषेधेन तदङ्ग भूताव्यभिचारितात्वादिसंयोगस्यापि प्रतिषिद्धत्वेन दोषस्य विद्यमानत्वाद्भवत्येव प्रायश्चित्तम्—'चरेद्व्रतमहत्वापि घातार्थं चेत्समागतः' इति । यथा हननप्रतिषेधेन तदङ्गभूताध्यवसायोदरपि प्रतिषिद्धत्वा-त्प्रायश्चित्तविधानम् । यत्तु बौधायनीयम्—'त्रैमासिकममत्या सुरापाने कृच्छ्राब्दपादं चरित्वा पुनरुपनयनम्' इति । यच्च याम्यम्—'सुरां पीत्वा द्विज हत्वा रुक्मं हृत्वा द्विजन्मनः । संयोगं पतितैर्गत्वा द्वि-जश्चान्द्रायणं चरेत्' ॥ इति । यदपि बार्हस्पत्यम्—'गौडीं माध्वीं सु-रां पैष्टीं पीत्वा विप्रः समाचरेत् । तप्तकृच्छ्रं पराकं च चान्द्रायणम-नुक्रमात्' ॥ इति, तत्त्रितयमप्यनन्यौषधसाध्यव्याध्युपशमार्थे पाने वे-दितव्यम् । प्रायश्चित्तस्यात्पत्वात् । यदा तु सुरासंसृष्टं शुष्करसमे-वान्नं भक्षयति तदा पुनरुपनयनम् । यथाह मनुः (११।१५०)—'अज्ञा-नात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च । पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः' ॥ इति । यदा च शुष्कसुराभाण्डस्थोदकं पिबति तदा शातातपोक्तं कुर्यात्—'सुराभाण्डोदकपाने छर्दनं घृतप्राशन-महोरात्रोपवासश्च' इति । यत्तु बौधायनीयम्—'सुरापानस्य यो भाण्डेष्वपः पर्युषिताः पिबेत् । शङ्खपुष्पीविपक्वं तु क्षीरं सर्पिः पिबेत् त्र्यहम्' ॥ इति तत्पर्युषितत्वादाधिकम् । अकामतोऽभ्यासे पुनर्मनुनो-क्तम् (११।१४७)-'अप. सुराभाजनस्था मद्यभाण्डस्थितास्तथा । पञ्च-रात्रं पिबेत्पीत्वा शङ्खपुष्पीशृतं पयः' ॥ इति तन्मतिपूर्वकपाने । ज्ञानतो-ऽभ्यासे तु वृहद्यम आह— 'सुराभाण्डस्थितं तोयं यदि कश्चित्पिबे-द्द्विज' । स द्वादशाहं क्षीरेण पिबेद्ब्राह्मीं सुवर्चलाम्' ॥ इति । सुराप स्य मुखगन्धाघ्राणे तु मानवम् (११।१४९)—'ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः । प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुद्ध्य-ति' ॥ इति, तत्सोमयाजिन एवाऽमतिपूर्वे । मतिपूर्वे तु द्विगुणम् । अपीतसोमस्य तु कल्प्यम् । साक्षात्सुरागन्धाघ्राणस्य तु 'प्रातिरग्ने-

यमद्ययोः' इति जातिभ्रंशकरत्वात् (११।१२४)—'जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया । चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया' ॥ इति मनूक्तं द्रष्टव्यम् ॥ २५४ ॥

( मिता० ) एवं मुख्यसुरापाने प्रायश्चित्तमुक्त्वा मद्यपाने प्रायश्चित्तमाह—

अज्ञानादिति । यः पुनरज्ञानादुदकबुद्ध्या सुरां मद्य ब्राह्मणः पिबति ये च ब्राह्मणादयो रेतोविण्मूत्राणि प्राश्नन्ति ते त्रयोऽपि द्विजातयो वर्णास्तप्तकृच्छ्रपूर्वकं पुनरुपनयनं प्रायश्चित्तमर्हन्ति । अत्र मद्यपाने योऽयं पुनःसंस्कारः स ब्राह्मणस्यैव । क्षत्रियविशोस्तदभ्यनुज्ञानस्य दर्शितत्वात् । सुराशब्दश्चात्र मद्यपरः । प्रायाश्चित्तस्यातिलघुत्वात् । अज्ञानतो मुख्यसुरापाने द्वादशवार्षिकस्य विहितत्वाच्च । अत एव गौतमेनात्र मद्यशब्दः प्रयुक्तः । 'अमत्या मद्यपाने पयो घृतमुदकं वा त्र्यहं तप्तानि पिबेत्स तप्तकृच्छ्रस्ततोऽस्य संस्कारो मूत्रपुरीषकुणपरेतसां प्राशने चे'ति । यदप्यस्मिन्नेव विषये मनुनोक्तम् (११।१४६)—'अज्ञानाद्वारुणीं पीत्वा संस्कारेण विशुध्यति' इति, तदपि तप्तकृच्छ्रपूर्वकमेव । गौतमवाक्यानुरोधात् । पुनःसंस्कारश्च पुनरुपनयम् । तच्चाश्वलायनाद्युक्तक्रमेण कर्तव्यम् । यथोक्तम्—'अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननं चानिरुक्तं परिदानं कालश्च तत्सवितुर्वृणीमह इति सावित्रीम्' इति । मतिपूर्वमद्यपाने वसिष्ठोक्तं द्रष्टव्यम्—'मत्या मद्यपाने त्वसुराया सुरायाश्चाज्ञाने कृच्छ्रातिकृच्छ्रौ घृतप्राशनं पुनःसंस्कारश्च' इति । चान्द्रायणं वा शङ्खोक्तम्—'असुरामद्यपायी चान्द्रायणं चरेत्' इति । मुखमात्रप्रवेशे तु मद्यस्यापस्तम्बीय षड्रात्रम्—'अभक्ष्याणामपेयानामलेह्यानां च भक्षणे । रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत् ॥ पद्मोदुम्बरविल्वानां पलाशस्य कुशस्य च । एतेषामुदकं पीत्वा षड्रात्रेण विशुध्यति' ॥ इति । एतच्च तालादिमद्यविषयम् । गौडीमाध्व्यो पुनरज्ञानतः पाने 'असुरायाः सुरायाश्चाज्ञानतः' इति वसिष्ठोक्तः कृच्छ्रातिकृच्छ्रसहितः पुनःसंस्कारो घृतप्राशश्च द्रष्टव्यः । तयोर्मतिपूर्वपाने तु 'पिण्याकं वा कणान्वा' इति त्रैवार्षिकम् । कामतस्तु तत्पानाभ्यासे 'अभ्यासे तु सुराया अग्निवर्णां सुरां पिबेन्मरणात्पूतो भवति' इति वासिष्ठं मरणान्तिकं द्रष्टव्यम् । नात्र सुराशब्दः पै-

त्यभिप्रायः । तस्याः सकृत्पानेऽपि मरणान्तिकस्य दर्शितत्वात् । मद्यवासितशुष्कभाण्डस्थोदकस्याज्ञानतः पाने बृहद्यमोक्तम्—'मद्यभाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विजः । कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्तयेत्' ॥ इति । अज्ञानतोऽभ्यासे तु वसिष्ठेनोक्तम्—'मद्यभाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विजः । पद्मोदुम्बरबिल्वानां पलाशस्य कुशस्य च ॥ एतेषामुदकं पीत्वा त्रिरात्रेण विशुद्ध्यति' । इति । ज्ञानतः पाने तु विष्णूक्तम्—'मद्यभाण्डस्थितं तोयं पीत्वा पञ्चरात्रं शङ्खपुष्पीशृतं पयः पिबेत्' इति । ज्ञानतोऽभ्यासे तु शङ्खेनोक्तम्—'मद्यभाण्डस्थितं तोयं पीत्वा सप्तरात्रं गोमूत्रयावकं पिबेत्' इति । अत्यन्ताभ्यासे तु हारीतोक्तम्—'मद्यभाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विजः । द्वादशाहं तु पयसा पिबेद्ब्राह्मीं सुवर्चलाम्' ॥ इति । एषु च वाक्येषु द्विजग्रहणं ब्राह्मणाभिप्रायम् । क्षत्रियवैश्ययोरप्रतिषेधादिति दर्शितं प्राक् । इदं च गौडीमाध्वीभाण्डस्थजलपानविषयं गुरुत्वात्प्रायश्चित्तस्य । तालादिमद्यभाण्डोदकपाने तु कल्प्यम् ॥२५५॥

(वी० मि०) न केवलं द्विजातीनामेवोक्तानि प्रायश्चित्तानि, किन्तु तद्भार्याणामपि (१)स्त्रीत्वाद्भर्तार्धमित्यभिप्रेत्य निन्दार्थवादमाह—

पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ॥
इहैव सा शुनी गृध्री शूकरी चोपजायते ॥ २५६ ॥

ब्राह्मणीपदं द्विजातिभार्यापरं तेन शूद्राया अपि द्विजपरिणितायाः प्रायश्चित्तम् । अत एव मनुः—

पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् ।
पतितार्धशरीरस्य निष्कृतिर्न विधीयते ॥

इति । एवं च वर्णपुरस्कारेण निषेधलिङ्गस्य विवक्षितत्वात् क्षत्रियवैश्यजातिस्त्रियोः सुरापाननिषेधप्राप्तावपि वचनमिदमनर्थकं शूद्रायाःप्रायश्चित्तप्राप्त्यर्थत्वात् । तस्मात् द्विजातिभार्या या सुरां पिबति सा पत्या सह धर्माचरणेनाऽर्जितं स्वर्गलोकं न याति धर्मस्य सुरापानेनैव नाशात् । इह मर्त्यलोके सा शुन्यादिर्जायते इत्यर्थः । एवकारेणाऽन्तरा मनुष्यजन्मयोनिव्यवच्छेदः । चकारेण सुरापीभर्तुः पतनं समुच्चीयते ॥ २५६ ॥

(१) तद्भार्याणामपि स्त्रीत्वात्तदर्धमि०—इति ख० पु० पाठः ।

( मिता० ) द्विजातिभार्यां प्रत्याह—

पतिलोकमिति । या द्विजातिभार्या सुरां पिबति सा कृतपुण्यापि सती पतिलोकं न याति किन्त्विहैव लोके श्वगृध्रशूकरलाक्षितां तिर्यग्योनिं क्रमेण प्राप्नोति । ब्राह्मणीग्रहणं चात्र 'तिस्रो वर्णानुपूर्व्येण' इति न्यायेन यस्य द्विजातेर्यावत्यो भार्यास्तासामुपलक्षणम् । अत एव मनुः—'पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् । पतितार्धशरीरस्य निष्कृतिर्न विधीयते' ॥ इति । धर्मार्थकामेषु सहाधिकाराद्दम्पत्योरेकशरीरत्वमेव, अतो यस्य द्विजातेर्भार्या सुरां पिबति तस्य भार्यारूपमर्धं शरीरं पतति । पतितस्य च भार्यारूपस्यार्धशरीरस्य निष्कृतिर्न विधीयते । तस्मात् द्विजातिभार्यया ब्राह्मण्याद्यया न सुरा पेया । 'तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्' इति निषेधविधौ लिङ्गस्याविवक्षितत्वेन वर्णत्रयभार्याणामपि प्रतिषेधे सिद्धे पुनर्वचनं द्विजातिभार्यायाः शूद्राया अपि सुराप्रतिषेधप्राप्त्यर्थम । अतो द्विजातिभार्याभिः सुरापाने प्रायश्चित्तस्यार्धं कार्यम् । शूद्रभार्यायास्तु शूद्रायाः शूद्रवदेव न प्रतिषेधः । सुरापानसमेषु तु निषिद्धभक्षणादिषु सुरापानप्रायश्चित्तार्धमित्युक्तं प्राक् २५६

इति सुरापानप्रायश्चित्तप्रकरणम् ।

---

(वी०मि०) अथ क्रमप्राप्तं स्तेयप्रायश्चित्तमाह—

> ब्राह्मणस्वर्णहारी तु राज्ञे मुसलमर्पयेत् ॥
> स्वकर्म ख्यापयंस्तेन हतो मुक्तोऽपि वा शुचिः ॥ २५७ ॥
> अनिवेद्य नृपे शुद्ध्येत्सुरापव्रतमाचरन् ॥
> आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत् ॥ २५८ ॥

ब्राह्मणस्वामिकषोडशमाषपरिमितसुवर्णापहारी तु स्वहननाय मुसलं स्वकर्म सुवर्णस्तेयं ख्यापयन् राज्ञेऽर्पयेत् । तेन राज्ञा सकृत् स्वयमेव दृढं ताडितो मृतः शुचिः । यदि चाऽऽयुःशेषवशात् राज्ञा प्रहृतेऽपि मरणान्मुक्तः तदा शुचिरित्यर्थः । अपिवेति सम्भावनाविकल्पार्थकम् । तदाह संवर्तः—

> स्तेयं कृत्वा सुवर्णस्य राज्ञे शंस्यात्तु किल्बिषम् ।
> ततो मुसलमादाय सकृद्धन्यात्तु तं स्वयम् ॥

यदि जीवति स स्तेनस्ततः पापात्प्रमुच्यते ।

राज्ञश्चाऽत्र हनने न दोषः, किन्त्वहनन एव पापम् । 'अघ्नन्नेनस्वी राजे'ति गौतमवचनात् । कामकृते स्तेये प्रायश्चित्तमभिधायाऽकामकृतेऽभिधत्ते—अनिवेद्येति । नृपे अनिवेद्य स्वकर्माऽकथयित्वा मुसलं चाऽनर्पयित्वा सुरापव्रतं द्वादशवार्षिकमाचरन् शुद्ध्येत् । सुरापपदेन शिरःकपालधारणादिव्यवच्छेदः । शङ्खोऽप्याह—

अधःशायी जटाधारी पर्णमूलफलाशनः ।
एककालं समश्नानो वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्मघ्नो गुरुतल्पगः ।
व्रतेनैतेन शुद्ध्यन्ति महापातकिनस्त्विमे ॥

आत्मेति । आत्मशरीरमितं सुवर्णं वा एकस्य विप्रस्य जावज्जीवतृप्तिक्षमं धनं वा दद्यात् इति, अकामकृतस्तेये प्रायश्चित्तद्वयम् । शूलपाणिस्तु—'द्वादशवार्षिकव्रत आरब्धे हिरण्यादिदानं नैमित्तिकं तत्समाप्तिर्वीज'मित्याह । तत्तुच्छम्, एकस्मिन् दिने व्रतमारभ्य झटित्येव सुवर्णदाने प्रायश्चित्ताधिक्याभावादेवं कल्पने मानाभावादिति दिक् ॥ २५७—२५८ ॥

( मिता० ) क्रमप्राप्तं सुवर्णस्तेयप्रायश्चित्तमाह—

ब्राह्मणेति । ब्राह्मणस्वामिकं सुवर्णं योऽपहरत्यसौ सुवर्णस्तेयं मया कृतमित्येवं स्वकर्म ख्यापयन् राज्ञे मुसलं समर्पयेत् । मुसलसमर्पणस्य दृष्टार्थत्वात्तेन मुसलेन राजा तं हन्यात् । तेन राज्ञा हतो मुक्तो वा शुद्धो भवति । अवहरणशब्देन च समक्षं परोक्षं वा बलाच्चौर्येण वा क्रयादिस्वत्वहेतुं विना ग्रहणमुच्यते । मुसलं समर्पयेदिति यद्यपि सामान्येनोक्तं तथापि तस्य हननार्थत्वात् तत्समर्थस्याऽयोमयादेर्ग्रहणम् । अत एव मनुनोक्तम् ( ८।३१५ )—'स्कन्धेनादाय मुसलं लकुटं वापि खादिरम् । (१)असिं चोभयतस्तीक्ष्णमायसं दण्डमेव वा' ॥ इति । शङ्खेनाप्यत्र विशेष उक्तः—'सुवर्णस्तेनः प्रकीर्णकेश आर्द्रवासा आयसं मुसलमादाय राजानमुपतिष्ठेदिदं मया पापं कृतमनेन मुसलेन मां घातयस्वेति स राज्ञा शिष्टः सम्पूतो भवति' इति । हननं चावृत्तिविधानाभावात्सकृदेव कार्यम् । अत एव

( १ ) शक्तिं चोभयतस्तीक्ष्णामिति पाठः ।

महरणवदुपपातकमेवेति युक्तम् । किञ्च—सुवर्णान्न्यूनपरिमाणहे महरणे प्रायश्चित्तान्तरोपदेशात्तत्परिमाणस्यैव हेम्नो हरणे मरणान्तिकादिप्रायश्चित्तमिति युक्तम् । तथा चोक्त षट्त्रिंशन्मते—'बालाग्रमात्रेऽपहृते प्रणायामं समाचरेत् । लिक्षामात्रेऽपि च तथा प्राणायामत्रय वुधः ॥ राजसर्षपमात्रे तु प्राणायामचतुष्टयम् । गायत्र्यष्टसहस्र च जपेत्पापविशुद्धये ॥ गौरसर्षपमात्रे तु सावित्रीं वै दिनं जपेत् ॥ यवमात्रे सुवर्णस्य प्रायश्चित्तं दिनद्वयम् ॥ सुवर्णकृष्णलं ह्येकमपहृत्य द्विजोत्तम । कुर्यात्सान्तपनं कुर्यात्तत्पापस्यापनुत्तये ॥ अपहृत्य सुवर्णस्य माषमात्र द्वि(१)जोत्तमः । गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुध्यति ॥ सुवर्णस्यापहरणे वत्सरं यावकी भवेत् । ऊर्ध्वं प्राणान्तिकं ज्ञेयमथवा ब्रह्महव्रतम्' ॥ इदं च वत्सरं यावकाशनं किञ्चिन्न्यूनसुवर्णापहारविषयम् । सुवर्णापहारे मन्वादिमहास्मृतिषु द्वादशवार्षिकविधानात् । 'वलाद्ये कामकारेण गृह्णन्ति स्वं नराधमाः । तेषां तु वलहर्तॄणां प्राणान्तिकमिहोच्यते' ॥ सुवर्णपरिमाणादर्वागपीत्यभिप्रेतम् । इदं च स्तेयप्रायश्चित्तमपहृतधनं तत्स्वामिने दत्त्वैव कार्यम् । 'स्तेये ब्रह्मस्वभूतस्य सुवर्णादेः कृते पुनः । स्वामिनेऽपहृतं देयं हर्त्रा त्वेकादशाधिकम्' ॥ इति स्मरणात् । तथा ( मनुः ११।१६४ )—'चरेत्सान्तपनं कृच्छ्र त(२)न्निर्यात्यात्मशुद्धये' इति मनुस्मरणाच्च । दण्डप्रकरणेऽप्युक्तम्—'शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनम्' ॥ इति । यद्वाऽत्यशक्त्या राजा हन्तुमसमर्थस्तदा वसिष्ठोक्तं द्रष्टव्यम्—'स्तेनः प्रकीर्णकेशो राजानमभियाचेत् ततस्तस्मै राजौदुम्बरं शस्त्रं दद्यात्तेनात्मानं प्रमापयेत् मरणात्पूतो भवतीति विज्ञायते' इति । औदुम्बरं ताम्रमयम् । यदपि द्वितीयं प्रायश्चित्त तेनोक्तम्—'निष्कालको गोघृताक्तो गोमयाग्निना पादप्रभृत्यात्मानं प्रमापयेन्मरणात्पूतो भवतीति विज्ञायते' इति, तदपि गुरुश्रोत्रिययागस्थादिविप्रद्रव्यापहारविषयं क्षत्रियाद्यपहर्तृविषयं वा । तत्र निष्कालक इति निर्गतकेशश्मश्रुलोमाभिधीयते । तथाश्वमेधाद्यनुष्ठानेन वा । तथा प्रचेतसा मरणान्तिकमाभिधायोक्तम्—'इष्ट्वा वाश्वमेधेन गोसवेन वा विशुध्येत्' इति । एतच्च विट्क्षत्रियाद्यपहर्तृविषयम् ॥ २५७ ॥

---

(१) द्विजाधमः । (२) तन्निर्दाय्यात्मशुद्धये इति पाठ ।

अथ कालदुष्टभक्षणे प्रायश्चित्तम्—कालदुष्टं च पर्युषितानिर्दशगोक्षीरादि । तत्र चाकामतः 'शेषेषूपवसेदहः' इति मनूक्तं वेदितव्यम् । कामतस्तु—'केवलानि च शुक्तानि तथा पर्युषितं च यत् । ऋजीषपक्वं भुक्त्वा च त्रिरात्रं तु व्रती भवेत्' ॥ इति शङ्खोक्तं वेदितव्यम् । केवलान्यस्नेहाक्तानि । अनिर्दशगोक्षीरादिषु प्रायश्चित्त प्राक् प्रदर्शितम् । नवोदकस्य पाने तु पञ्चगव्यप्राशनम्—'शृङ्गास्थिदन्तजैः पात्रैः शङ्खशुक्तिकपर्दकैः । पीत्वा नवोदकं चैव पञ्चगव्येन शुध्यति' ॥ इति बृहद्याज्ञवल्क्यस्मरणात् । कामतस्तूपवासः कर्तव्यः—'काले नवोदकं शुद्धं न पिबेच्च त्र्यहं हि तत् । अकाले तु दशाहं स्यात्पीत्वा नाद्यादहर्निशम्' ॥ इति स्मृत्यन्तरदर्शनात् । ग्रहणकालभोजने तु चान्द्रायणम्—'नवश्राद्धग्रामयाजकान्नसग्रहभोजने । नारीणां प्रथमे गर्भे भुक्त्वा चान्द्रायणं चरेत्' ॥ इति शातातपस्मरणात् । यदा तु सग्रहादन्यत्र निषिद्धकाले भुङ्क्ते तदाह मार्कण्डेयः—'चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव । ग्रहणं तु भवेत्तस्मिन्न पूर्वं भोजनक्रियाम् ॥ नाचरेत्सग्रहे चैव तथैवास्तमुपागते । यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु' ॥ तथा—'ग्रहणं तु भवेदिन्दोः प्रथमादधियामतः । भुञ्जीतावर्तनात्पूर्वं प्रथमे प्रथमादधः' ॥ तथा—'अपराह्णे न मध्याह्ने सायाह्ने न तु सङ्गवे । भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भोजनक्रिया' ॥ इति । यच्च मनुनोक्तम्—'नाश्नीयात्संधिवेलायां नातिप्रगे नातिसायमित्येवमादि' । यच्च बृहच्छातातपेनोक्तम्—'धाना दधि च सक्तूंश्च श्रीकामो वर्जयेन्निशि । भोजनं तिलसंबद्धं स्नानं चैव विचक्षणः' ॥ इत्येवमादिष्वनादिष्टप्रायश्चित्तेषु—'प्राणायामशतं कार्यं सर्वपापापनुत्तये । उपपातकजातानामनादिष्टस्य चैव हि' ॥ इति योगीश्वरोक्तं प्राणायामशतं द्रष्टव्यम् । अकामतस्तु 'शेषेषूपवसेदह.' इति मनूक्त उपवासो द्रष्टव्यः ॥

अथ गुणदुष्टशुक्तादिभक्षणे प्रायश्चित्तम् । तत्र मनुः (११।१५४)—'शुक्तानि च कषायांश्च पीत्वाऽमेध्यान्यपि द्विजः । तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः' ॥ इति । अत्राकामतः 'शेषेषूपवसेदहः' इत्युपवासो द्रष्टव्यः । कामतस्तु—'केवलानि च शुक्तानि तथा पर्युषितं च यत् । ऋजीषपक्वं भुक्त्वा च त्रिरात्रं तु व्रती भवेत्' ॥ इति शङ्खोक्तं द्रष्टव्यम् । एतच्चामलकादिफलकाञ्जिकादिव्यतिरेकेण द्रष्टव्यम् । 'कु-

पिडका सफला येषु गृहेषु स्थापिता भवेत्। तस्यास्तु काञ्जिका ग्राह्या नेतरस्याः कदाचन'॥ इति स्मरणात्। उद्धृतस्नेहादिषु तु 'उद्धृतस्नेहविलयनपिण्याकमथितप्रभृतीनि चात्तवीर्याणि नाश्नीयात्' इत्युक्त्वा 'प्राक्पञ्चनखेभ्यश्छर्दनं घृतप्राशनं च' इति गौतमोक्तं द्रष्टव्यम्। विलयनं घृतादिमलम्। अनाहुताद्यन्नभोजने तु लिखित आह—यस्य चाग्नौ न क्रि(१)यते यस्य (२)चाग्रं न दीयते। न तद्भोज्यं द्विजातीनां भुक्त्वा चोपवसेदहः॥ वृथाकृसरसंयावपायसापूपशष्कुलीः। आहिताग्निर्द्विजो भुक्त्वा प्राजापत्यं समाचरेत्'। इति। अनाहिताग्नेस्तु 'शेषेषूपवसेदहः' इत्युपवासो द्रष्टव्यः। भिन्नभाजनादिषु तु भोजने संवर्तेनोक्तम्—'शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने। अहोरात्रोषितो भुक्त्वा पञ्चगव्येन शुध्यति'॥ इति॥ तथा स्मृत्यन्तरेऽप्युक्तम्—'वटार्काश्वत्थपत्रेषु कुम्भीतिन्दुकपत्रयोः। कोविदारकदम्बेषु भुक्त्वा चान्द्रायणं चरेत्'॥ इति। तथा—'पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत्। वानप्रस्थो यतिश्चैव लभते चान्द्रिकं फलम्'॥ इति॥

अथ हस्तदानादिक्रिया(३)दुष्टाभोज्यभक्षणे प्रायश्चित्तम्। तत्र पराशरः—'माक्षिकं फा(४)णितं शाकं गोरसं लवणं घृतम्। हस्तदत्तानि भुक्त्वा तु दिनमेकमभोजनम्'॥ इति। कामतस्तु—'हस्तदत्तभोजने अब्राह्मणसमीपे भोजने दुष्टपङ्क्तिभोजने पङ्क्त्यग्रतो भोजनेऽभ्यक्तमूत्रपुरीषकरणे मृतसूतकशूद्रान्नभोजने शूद्रैः सह स्वप्ने त्रिरात्रमभोजनम्' इति हारीतोक्तं विज्ञेयम्। पर्यायान्नदानदुष्टे तु—'ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्। द्वयमेतदभोज्यं स्याद्भुक्त्वा तूपवसेदहः'॥ इति वृद्धयाज्ञवल्क्योक्तमवगन्तव्यम्। शूद्रहस्तेन भोजने तु—'शूद्रहस्तेन यो भुङ्क्ते पानीयं वा पिबेत्क्वचित्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति' इति क्रतूक्तं विज्ञेयम्। धमनदुष्टेऽपि—'आसनारूढपादो वा वस्त्रार्धप्रावृतोऽपि वा। मुखेन धमितं भुक्त्वा कृच्छ्रं सान्तपनं चरेत्'॥ इति तेनैवोक्तम्। पित्राद्युद्देशेन त्यक्तान्नभोजने तु 'भुङ्क्ते चेत्पार्वणश्राद्धे प्राणायामान्षडाचरेत्। उपवासस्त्रिमासादिवत्सरान्तं प्रकीर्तितः॥ प्राणायामत्रयं वृद्धावहोरात्रं सपि-

(१) क्रियते ख। (२) चान्न ख। (३) दुष्टान्नभोजने ख।
(४) फाणितम्-इक्षुरसविकारः काकवीति लोके प्रसिद्धम्।

ण्डने । असरूपे स्मृतं नक्तं व्रतपारणके तथा ॥ द्विगुणं क्षत्रियस्यैत-त्रिगुणं वैश्यभोजने । साक्षाच्चतुर्गुणं ह्येतत्स्मृतं शूद्रस्य भोजने ॥ अतिथौ तिष्ठति द्वारि ह्यपः प्राश्नन्ति ये द्विजाः । रुधिरं तद्भवेद्वारि भुक्त्वा चान्द्रायणं चरेत्' ॥ इति भारद्वाजोक्तमवगन्तव्यम् । हारीतेनाप्युक्तम्—'एकादशाहे भुक्त्वान्नं भुक्त्वा संचयने तथा । उपोष्य विधिवत्स्नात्वा कूष्माण्डैर्जुहुयाद् घृतम्' ॥ इति । विष्णुनाप्युक्तम्—'प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके । त्रैपक्षिके तदर्धं तु पञ्चगव्यं द्विमासिके' ॥ इति । इदं चापद्विषयम् । अनापदि तु—'चान्द्रायण नवश्राद्धे प्राजापत्यं तु मि(१)श्रके । एकाहस्तु पुराणेषु प्रा(२)यश्चित्तं विधीयते' ॥ इति हारीतोक्त द्रष्टव्यम् । प्राजापत्यं तु मिश्रके इत्येतदाद्यमासिकविषयं द्रष्टव्यम् । द्वितीयादिषु तु—'प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके । त्रैपक्षिके तदर्धं स्यात्पादो द्वैमासिके तथा ॥ पादोनकृच्छ्रमुद्दिष्टं षण्मासे च तथाब्दिके । त्रि(३)रात्रं चान्यमासेषु प्रत्यहं चेदहः स्मृतम्' ॥ इति षट्त्रिंशन्मतोक्तं द्रष्टव्यम् । क्षत्रियादिश्राद्धभोजने त्वनापदि तत्रैव विशेष उक्तः—'चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः । त्रैपक्षिके सान्तपनं कृच्छ्रो मासद्वये स्मृतः ॥ क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम् । वैश्यस्यार्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः ॥ शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम् । सार्धं चान्द्रायणं मासे त्रिपक्षे त्वैन्दवं स्मृतम् ॥ मासद्वये पराकः स्यादूर्ध्वं सान्तपनं स्मृतम्' ॥ इति । यत्तु शङ्खवचनम्—'चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः । पक्षत्रयेऽतिकृच्छ्रः स्यात्षण्मासे कृच्छ्र एव तु ॥ आब्दिके पादकृच्छ्रः स्यादेकाहः पुनराब्दिके । अत ऊर्ध्वं न दोषः स्याच्छङ्खस्य वचनं यथा' ॥ इति, तत्सर्पादिहतविषयम् । 'ये स्तेनाः पतिताः क्लीवा' इत्याद्यपाङ्क्त्यविषयं वा । 'चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ पतनानाशकैश्चैव विषोद्बन्धनकैस्तथा । भुक्त्वैषां षोडशश्राद्धे कुर्यादिन्दुव्रतं द्विजः' ॥ इति । तथा—'अपाङ्क्त्यान्युदुद्दिश्य श्राद्धमेकादशेऽहनि । ब्राह्मणस्तत्र भुक्त्वान्नं शिशुचान्द्रायण चरेत्' ॥ इति । 'आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुध्यति । सङ्कलिपते तथा भुक्त्वा त्रिरात्रं क्षपणं भवेत्' ॥ इति भरद्वाजेन गुरु-

(१) मासिके इ । (२) प्राजापत्य । (३) 'द्विरात्रमिति पाठान्तरम् ।

प्रायश्चित्ताभिधानात् ॥

ब्रह्मचारिणस्तु बृहद्यमो विशेषमाह—'मासिकादिषु योऽश्नीया-दसमाप्तव्रतो द्विज । त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ॥ प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यति' । इति, इदमज्ञानविषयम् । कामतोऽपि स एवाह—'मधु मांसं तु योऽश्नीयाच्छ्राद्धे सूतक एव वा । प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत्' ॥ इति । आमश्राद्धे तु सर्वत्रार्धम्—'आमश्राद्धे तदर्धं तु प्राजापत्यं तु सर्वदा' इति षट्त्रिंशन्मतेऽभिधानात् । यत्तूशनसोक्तम्—'दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विज । ततः सन्ध्यामुपासीत शुद्ध्येत्तु तदनन्तरम्' ॥ इति तदनुक्तप्रायश्चित्तश्राद्धविषयम् । संस्काराङ्गभूतश्राद्धभोजने तु व्यासेन विशेष उक्तः—'निर्वृत्तचूडाहोमे तु प्राङ्नामकरणात्तथा । चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि ॥ अतोऽन्येषु तु भुक्त्वान्नं संस्कारेषु द्विजोत्तमः । नियोगादुपवासेन शुध्यते निन्द्यभोजने' ॥ इति । सीमन्तोन्नयनादिषु पुनर्धौम्यो विशेषमाह-'ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे द्विजश्चान्द्रायणं चरेत्' ॥ इति । अत्र ब्रह्मौदनाख्यं कर्माऽऽधानाङ्गभूतं सोमसाहचर्यात् ॥

अथ परिग्रहाभोज्यभोजने प्रायश्चित्तम्—यत्स्वरूपतोऽनिषिद्धमपि विशिष्टपुरुषस्वामिकतयाऽभोज्यं भण्यते तत्परिग्रहाशुचि । तत्र योगीश्वरेण—'अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि' इत्यारभ्य सार्धपञ्चभिः श्लोकैरभोज्यान्नाः प्रतिपादिताः । मनुनापि त एव किंचिदधिकाः प्रतिपादिताः । (४।२०५—२१७)—'नाश्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा । स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित् ॥ मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन । गणान्नं गणिकान्नं च विदुषां च जुगुप्सितम् ॥ स्तेनगायकयोश्चान्नं तक्ष्णो वार्धुषिकस्य च । दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥ अभिशस्तस्य षण्ढस्य पुंश्चल्या दाम्भिकस्य च । चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिन. ॥ उग्रान्नं सूतिकान्नं च पर्यायान्नमनिर्दशम् । अनर्चितं वृथामांसमवीरायाश्च योषितः ॥ द्विषदन्नं नगर्यन्नं प(१)तितान्नमवक्षुतम् । पिशुनानृतिनोश्चैव क्रतुविक्रयिणस्तथा ॥ शैलूषतन्तुवायान्नं कृतघ्नस्यान्नमेव च । कर्मारस्य निषादस्य रङ्गावतरणस्य च ॥ सुवर्णकर्तु-

(१) पतितान्नमवेक्षित ४ ।

वैणस्य शस्त्रविक्रयिणस्तथा। श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य च॥ रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे। मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः॥ अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च'॥ इति। अत्र च पदार्था अभक्ष्यकाण्डे श्राद्धकाण्डे च व्याख्याताः। अत्र प्रायश्चित्तमाह (मनुः४।२२२)—'भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम्। मत्या भुक्त्वा चरेत्कृच्छ्रं रेतोविण्मूत्रमेव च'॥ इति। पैठीनसिनाप्यकामतस्त्रिरात्रमेवोक्तम्। कुनखी श्यावदन्तः पित्रा विवदमानः स्त्रीजितः कुष्ठी पिशुनः सोमविक्रयी वाणिजको ग्रामयाजकोऽभिशस्तो वृषल्यामभिजितः परिवित्तिः परिविन्दानो दिधिषूपतिः पुनर्भूपुत्रश्चौरः काण्डपृष्टः सेवकश्चेत्यभोज्यान्ना अपाङ्क्त्या अश्राद्धार्हाः एषां भुक्त्वा दत्त्वा वाऽविज्ञानात्त्रिरात्रम्' इति। शङ्खेन त्वेतानेव किंचिदधिकान्पठित्वा चान्द्रायणमुक्तं तदभ्यासविषयम्। गौतमेन पुनरुच्छिष्टपुंश्चल्यभिशस्तेत्यादिना अभोज्यान्नान् पठित्वा प्राक्पञ्चनखेभ्यश्छर्दनं घृतप्राशनं चेति प्रायश्चित्तमुक्तं तदापद्विषयम्। यस्तु बलात्कारेण भोज्यते तस्यापस्तम्बेन विशेष उक्तः—'बलाद्दासीकृता ये तु म्लेच्छचण्डालदस्युभिः। अशुभं कारिताः कर्म गवादिप्राणिहिंसनम्॥ उच्छिष्टमार्जनं चैव (१)तथोच्छिष्टस्य भोजनम्। खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम्॥ तत्स्त्रीणां च तथा सङ्गं ताभिश्च सह भोजनम्। मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम्॥ चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथ वा भवेत्। चान्द्रायणं पराकं च चरेत्संवत्सरोषितः॥ संवत्सरोषितः शूद्रो मासार्धं यावकं पिबेत्। मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति॥ ऊर्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः। संवत्सरैस्त्रिभिश्चैव तद्भावं स निगच्छति'॥ इति।

आशौचिपरिगृहीतान्नभोजने तु छागलेय आह-'अ(२)ज्ञानाद्भुञ्जते विप्राः सूतके मृतके तथा। प्राणायामशतं कृत्वा शुध्यते शूद्रसूतके॥ वैश्ये षष्टिर्भवेद्राज्ञि विंशतिर्ब्राह्मणे दश। एकाहं च त्र्यहं पञ्च सप्तरात्रमभोजनम्॥ त(३)तः शुद्धिर्भवत्येषां पञ्चगव्यं पिबेत्ततः'॥ इति। ब्राह्मणादिक्रमेणैकाहत्र्यहादयो योज्याः। इदमकामविषयम्। काम-

(१) तथा तस्यैव भोजनं ड। (२) आज्ञानाद्भोजने ख।
(३) तत शुद्धिर्भवेद्विप्र पञ्चगव्य पिबेन्नरः इति ड।

नस्तु मार्कण्डेय आह—'भुक्त्वा तु ब्राह्मणाशौचे चरेत्सान्तपनं द्विजः। भुक्त्वा तु क्षत्रियाशौचे तप्तकृच्छ्रो विधीयते ॥ वैश्याशौचे तथा भुक्त्वा महासान्तपनं चरेत्। शूद्रस्यैव तथा भुक्त्वा त्रि(१)मासा न्व्रतमाचरेत्' ॥ यत्तु शङ्खेनोक्तम्—'शूद्रस्य सूतके भुक्त्वा षण्मासा न्व्रतमाचरेत्। वैश्यस्य तु तथा भुक्त्वा त्रीन्मासान्व्रतमाचरेत् ॥ क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत्। ब्राह्मणस्य तथाऽशौचे भुक्त्वा मासव्रती भवेत्' ॥ इति। इदमभ्यासविषयम्। एतच्च प्रायश्चित्तमाशौचानन्तरं वेदितव्यम्। ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य तावदाशौचं यावत्तेषाम्। 'आशौचव्यपगमे तु प्रायश्चित्तं कुर्यात्' इति विष्णुस्मरणात् ॥

अपुत्राद्यन्नभोजनं तु लिखित आह—'भुक्त्वा वार्धुषिकस्यान्नमव्रतस्यासुतस्य च। शूद्रस्य च तथा भुक्त्वा त्रिरात्रं स्यादभोजनम्' ॥ तथा—'परपाकनिवृत्तस्य परपाकरतस्य तु। अपचस्य तु भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत्' ॥ इति। एतच्चाभ्यासविषयम् ॥ परपाकेन निवृत्तादेर्लक्षणं च तेनैवोक्तम्—'गृहीत्वाग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत्। परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः ॥ पञ्च(२)यज्ञांस्तु यः कृत्वा परान्नादुपजीवति। सततं प्रातरुत्थाय परपाकरतस्तु सः ॥ गृहस्थधर्मवृत्तौ यो ददाति परिवर्जितः। ऋषिभिर्धर्मतत्त्वज्ञैरपचः संप्रकीर्तितः' ॥ इति। यत्तु ब्रह्मचार्याद्यन्नभोजने वृद्धयाज्ञवल्क्य आह—'यतिश्च ब्रह्मचारी च पक्वान्तस्वामिनावुभौ। तयोरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्' ॥ इति। यच्च पार्वणश्राद्धाकर्तुरन्नभोजने भरद्वाज आह—'पक्षे वा यदि वा मासे यस्य नाश्नन्ति देवताः। भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत्' ॥ इति तदुभयमप्यभ्यासविषयम्। पूर्वपरिगणितातिरिक्ता ये निषिद्धाचरणशीलास्तदन्नभोजने तु-'निराचारस्य विप्रस्य निषिद्धाचरणस्य च। अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम्' ॥ इति षट्त्रिंशन्मतोक्तं द्रष्टव्यम्। अत्रैव संवत्सराभ्यासे षट्त्रिंशन्मत एवोक्तम्—'उपपातकयुक्तस्य अब्दमेकं निरन्तरम्। अन्नं भुक्त्वा द्विजः कुर्यात्पराकं तु विशोधनम्' ॥ इति। इदं चाभक्ष्यभक्षणप्रायश्चित्तकाण्डगतमविशेषोदितव्रतकदम्बकं हि द्विजान्यस्यैव।

---

(१) द्विजश्चान्द्रायणं चरेदिति ट।

(२) पञ्चयज्ञान्स्वयं कृत्वा परान्नमुपजीवति ट।

क्षत्रियादीनां तु पादपादहान्या भवति। 'विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम् । वैश्येऽर्धं पाद एकस्तु शूद्रजातिषु शस्यते' ॥ इति विष्णुस्मरणात् ॥

इत्यभक्ष्यभक्षणप्रायश्चित्तप्रकरणम् ॥

---

निमित्तपरिगणनवेलायामुपपातकानन्तरं जातिभ्रंशकरादीनि परिगणितानि, तत्र प्रायश्चित्तान्युच्यन्ते। तत्र मनु' (११।१२४-१२५)- 'जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया । चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम् । मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहम्' ॥ इति । अन्यतममिति सर्वत्र सम्बध्यते । यमेनाप्यत्र विशेष उक्तः—'सङ्करीकरणं कृत्वा मासमश्नाति यावकम् । कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं समाचरेत् ॥ अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति । शीतकृच्छ्रेण वा शुद्धिर्महासान्तपनेन वा। 'मलिनीकरणीयेषु तप्तकृच्छ्रं विशोनम्' इति । बृहस्पतिनापि जातिभ्रंशकरे विशेष उक्तः—'ब्राह्मणस्य रुजः कृत्वा रासभादिप्रमापणम् । निन्दितेभ्यो धनादानं कृच्छ्रार्धं व्रतमाचरेत्' ॥ इति । एतेषां च जातिभ्रंशकारादिप्रायश्चित्तानां मन्वाद्युक्तानां जातिशक्त्याद्यपेक्षया विषयो विभजनीयः । एवं योगीन्द्रहृद्गतमभक्ष्यभक्षणादिप्रायश्चित्त संक्षेपतो दर्शितम् ॥

( वी०मि० ) अथ कथञ्चिदेव कारणोद्देश(१)समये सूचिते प्रकीर्णके पापे क(२)चित्कचित्प्रायश्चित्तमाह—

प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः ॥
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् ॥२९०॥
गुरुं हुङ्कृत्य त्वङ्कृत्य विप्रं निर्जित्य वादतः ॥
बध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम् ॥ २९१ ॥
विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ॥
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते ॥२९२॥

खररूपं यानमुष्ट्ररूपं वा यानमारुह्य गन्ता, नग्नः सन्नेव स्नानं

---

( १ ) उद्देश्य—इति ख० पु० पाठः । ( २ ) क्वचित्प्राय०—इति ख० पु० पाठ ।

भोजनं वा कृतवान्, दिवा स्वभार्यासम्भोगी वा शुद्ध्यर्थं स्थावरजले स्नात्वा प्राणायामवान् स्यात् । एवकारेणाऽवधारणार्थकेन यानगतत्वं सूच्यते । चकारैः सर्वत्राऽकामतः कृतं स्नानमात्रमिति समुच्चीयते । गुरुं पित्राचार्यादिकं त्वङ्कृत्य त्वंशब्देन निर्भर्त्स्य विप्रं वा क्रोधे(१)न हुङ्कृत्य 'हुं तूष्णीमास्वे'त्यादिप्रकारेणाऽऽक्षिप्य वादेन जल्पाद्यात्मकेन विप्रं निर्जित्य च वाससा बध्वा च गुरुं विप्रं वा प्रसाद्यैकं दिनमुपवसेदेवं शुद्ध्यति । विप्रताडनार्थं दण्डोद्यमने कृच्छ्रः प्राजापत्यः शुद्धिहेतुः, विप्रोपरि दण्डप्रहारेण त्वतिकृच्छ्रः, प्रहारेण विप्रस्याऽसृजो रुधिरस्य पाते कृच्छ्रातिकृच्छ्रः, अभ्यन्तरस्थ एव शोणिते कृच्छ्रः अकामकृते । कामकृते तु कृच्छ्रद्वयम् । अतिपातकेषु प्रायश्चित्तं 'छित्वा लिङ्ग वधस्तस्ये'ति प्रागुक्तम् । जा(२)तिभ्रंशकरादिषु पापेषु मनुः—

जातिभ्रंशकरं कर्म कृत्वाऽन्यतममिच्छया ।
चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥
सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम् ।
मलिनीकरणीयेषु तप्तः स्याद्यावकैस्त्र्यहम् ॥ २९०-२९२ ॥

( मिता० ) अधुना प्रकृतमनुसरामः—महापातकमतिपातकमनुपातकमुपपातकं प्रकीर्णकमिति पञ्चविधं पापजातमुक्तम् । तत्र चतुर्विधपापे प्रायश्चित्तमभिधाय क्रमप्राप्ते प्रकीर्णके प्रायश्चित्तमाह—

प्राणायामीति । खरयुक्तं यानं खरयानम् । उष्ट्रयुक्तं यानमुष्ट्रयानं रथगन्त्र्यादि तेनाध्वगमनं कृत्वा दिगम्बरः स्नात्वाभ्यवहृत्य दिवा वासरे च निजाङ्गनासंभोगं कृत्वा च तडागतरङ्गिण्यादाववगाह्य कृतप्राणायामः शुध्यति । इदं च कामकारविषयम् (११।२०२)—'उष्ट्रयान समारुह्य खरयानं तु कामतः । (३)सवासा जलमाप्लुत्य प्राणायामेन शुध्यति' ॥ इति मनुस्मरणात् । अकामत स्नानमात्रं कल्प्यम् । साक्षात्खरारोहणे तु द्विगुणावृत्तिः कल्पनीया । तस्य गुरुत्वात् ॥ २९० ॥

( मिता० ) किञ्च—

गुरुमिति । गुरु जनकादिकं त्वङ्कृत्य त्वमेवमात्थ त्वयैवं कृतमित्येकवचनान्तयुष्मच्छब्दोच्चारणेन निर्भर्त्स्य विप्रं वा ज्यायांसं समं

(१) सक्रोध—इति ख० पु० पाठ ।
(२) जातिभ्रंशकरादीनि प्रायश्चित्तान्याह मनु —इति ख० पु० पाठ ।
(३) स्नात्वा तु विप्रो दिग्वासा इति पाठ ।

कनीयांसं वा सक्रोधं हुं तूष्णीमास्व, हुं मा बहुवादीः, इत्येवमाक्षिप्य जल्पवितण्डाभ्यां जयफलाभ्यां विप्रं निर्जित्य कण्ठे वाससा मृदुस्पर्शेनापि बध्वा क्षिप्रं पादप्रणिपातादिना प्रसाद्य क्रोधं त्याजयित्वा दिनमुपवसेत् अनश्नन्कृत्स्नं वासरं नयेत् । यत्तु यमेनोक्तम्—'वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया । त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्' ॥ इति, तदभ्यासविषयम् ॥ २९१ ॥

( मिता० ) किञ्चाह—

विप्रेति । विप्रजिघांसया दण्डाद्युद्यमे कृच्छ्रः शुद्धिहेतुः । निपातने ताडने अतिकृच्छ्रः । असृक्पाते रुधिरस्रावणे पुनः कृच्छ्रातिकृच्छ्रः । अभ्यन्तरशोणितेऽपि कृच्छ्रः शुद्धिहेतुः । बृहस्पतिनाप्यत्र विशेष उक्तः—'काष्ठादिना ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् । अस्थिभेदेऽतिकृच्छ्रः स्यात्पराकस्त्वङ्गकर्तने' ॥ इति । पादप्रहारे तु यम आह—'पादेन ब्राह्मणं स्पृष्ट्वा प्रायश्चित्तविधित्सया । दिवसोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्' ॥ इति । मनुना त्वन्यानि प्रकीर्णकप्रायश्चित्तानि दर्शितानि ( ११।२०२ )—'विनाद्भिरप्सु वाप्यार्तः शारीरं संनिषेव्य तु । सचैलो बहिराप्लुत्य गामालभ्य विशुध्यति' ॥ इति । विनाद्भिरित्यसंनिहितास्वपीत्यर्थः । शारीरं मूत्रपुरीषादि । इदमकामविषयम् । कामतस्तु—'आपद्गतो विना तोयं शारीरं यो निषेवते । एकाहं क्षपणं कृत्वा (१)सचैलो जलमाविशेत्' ॥ इति यमोक्तं वेदितव्यम् । यत्तु सुमन्तुवचनम्—'अप्स्वग्नौ वा मेहतस्तप्तकृच्छ्रम्' इति, तदनार्तविषयमभ्यासविषयं वा । नित्यश्रौतादिकर्मलोपे तु मनुराह ( ११।२०३ )—'वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्' ॥ इति । श्रौतेषु दर्शपौर्णमासादिकर्मसु स्मार्तेषु चानित्यहोमादिषु प्रतिपदोक्तेष्ट्यादिप्रायश्चित्तैरुपवासस्य समुच्चयः । स्नातकव्रतानि च—'न जीर्णमलवद्वासा भवेच्च विभवे सति' इत्येवमादीनि प्रागुक्तानि । स्नातकव्रतमधिकृत्य क्रतुनाप्युक्तम्—'एतेषामाचरणामेकैकस्य व्यतिक्रमे गायत्र्यष्टशतं जप्यं कृत्वा पूतो भवति' इति । पञ्चमहायज्ञाकरणे तु बृहस्पतिराह—'अनिर्वर्त्य महायज्ञान्यो भुङ्क्ते प्रत्यहं गृही । अनातुरः सति धने कृच्छ्रार्धेन विशुध्यति ॥ आहिताग्निरुपस्थानं न कुर्याद्यस्तु पर्वणि । ऋतौ

(१) सचेलः स्नानमाचरेत् क ।

न गच्छेद्भार्यां वा सोऽपि कृच्छ्रार्धमाचरेत्' ॥ इति। द्वितीयादिभार्योपरमे तु देवल आह—'मृतां द्वितीयां यो भार्यां दहेद्वैतानिकाग्निभिः। जीवन्त्यां प्रथमायां तु सुरापानसमं हि तत्' ॥ इति। स्वभार्याभिशंसने तु यम आह—'स्वभार्यां तु यदा क्रोधादगम्येति नरो वदेत्। प्राजापत्यं चरेद्विप्रः क्षत्रियो दिवसान्नव ॥ षड्रात्रं तु चरेद्वैश्यस्त्रिरात्रं शूद्र आचरेत्' ॥ इति ॥

अस्नानभोजनादौ हारीत आह—'वहन्कमण्डलुं रिक्तमस्नातोऽश्नंश्च भोजनम्। अहोरात्रेण शुद्धिः स्याद्दिनजप्येन चैव हि' ॥ इति। एकपङ्क्त्युपविष्टानां स्नेहादिना वैषम्येण दानादौ यम आह—'न पङ्क्त्यां विषमं दद्यान्न याचेत न दापयेत्। याचको दापको दाता न वै स्वर्गस्य गामिनः ॥ प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्ततः ॥ नदीसङ्क्रमहन्तुश्च कन्याविघ्नकरस्य च। समे विषमकर्तुश्च निष्कृ(१)तिर्नोपपद्यते ॥ त्रयाणामपि चैतेषां प्रत्याप(२)त्ति च मार्गताम्। भैक्ष्यलब्धेन चान्नेन द्विजश्चान्द्रायणं चरेत्' ॥ इति। सङ्क्रम उदकावतरणमार्गः। समे विषमकर्ता पूजादौ। इन्द्रधनुर्दर्शनादावृष्यशृङ्ग आह—'इन्द्रचापं पलाशाग्निं यदन्यस्य प्रदर्शयेत्। प्रायश्चित्तमहोरात्रं धनुर्दण्डश्च दक्षिणा' ॥ पतितादिसम्भाषणे तु गौतम आह—'न म्लेच्छाशुच्यधार्मिकैः सह सम्भाषेत। सम्भाष्य पुण्यकृतो मनसा ध्यायेत्। ब्राह्मणेन सह वा सम्भाषेत तल्पान्नधनलाभवधे पृथग्वर्षाणि' इति। भार्यान्नधनानां लाभस्य वधे विघ्नकरणे प्रत्येकं संवत्सरं प्राकृतं ब्रह्मचर्यम्। तथा ब्रह्मसूत्रं विना विण्मूत्रोत्सर्गादौ स्मृत्यन्तरे प्रायश्चित्तमुक्तम्—विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद्द्विजः। प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वा' ॥ तत्र ऊर्ध्वोच्छिष्टे उपवासः, अध उच्छिष्टे भक्ष्योदकपानादिषु गायत्रीजप इति व्यवस्था। अकामतस्तु—'पिबतो मेहतश्चैव भुञ्जतोऽनुपवीतिनः। प्राणायामात्रिकं षट्कं नवकं च त्रितयं क्रमात्' ॥ इति स्मृत्यन्तरोक्तं द्रष्टव्यम्। भुक्त्वा शौचार्थोऽऽचमनमकृत्वोत्थाने तु—'यद्युत्तिष्ठत्यनाचान्तो भुक्त्वा वानशनात्ततः। सद्यः स्नानं प्रकुर्वीत सोऽन्यथा पतितो भवेत्' ॥ इति स्मृत्यन्तरोक्तं द्रष्टव्यम्। चौराद्युत्सर्गादौ वसिष्ठ आह—'दण्डोत्सर्गे राजकरात्रमुपवसेत्त्रिरात्रं पुरोहितः कृच्छ्रमदण्ड्यदण्डने पुरोहित

(१) निष्कृतिर्न विधीयते इति पाठः। (२) प्राजापत्यं तु मार्गणमिति पाठः।

स्त्रिरात्रं राजा कुनखी श्यावदन्तश्च कृच्छ्रं द्वादशरात्रं चरित्वोद्धरेयाताम्' इति । उद्धरेयातां कुत्सितानां दन्तानां नखानां चोद्धरणं कुर्यातामित्यर्थः । स्तेनपतितादिपङ्क्तिभोजने तु मार्कण्डेय आह—'अपाङ्क्तेयस्य यः कश्चित्पङ्क्तौ भुङ्क्ते द्विजोत्तमः । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति' ॥ इति ॥

नीलीविषये त्वापस्तम्ब आह—'नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ रोमकूपैर्यदा गच्छेद्रसो नील्यास्तु कस्यचित् । त्रि(१)षु वर्णेषु सामान्यं तप्तकृच्छ्रं विशोधनम् ॥ पालनं विक्रयश्चैव तद्वृत्त्या चोपजीवनम् । पातनं च भवेद्वि(२)प्रस्त्रिभिः कृच्छ्रैर्व्यपोहति ॥ नीलीदारु यदा भिन्द्याद्ब्राह्मणस्य शरीरतः । शोणितं दृश्यते यत्र द्विजश्चान्द्रायणं चरेत् ॥ स्त्रीणां क्रीडार्थसम्भोगे शयनीये न दुष्यति' ॥ इति । भृगुणाप्युक्तम्—'स्त्रीधृता शयने नीली ब्राह्मणस्य न दुष्यति । नृपस्य वृद्धौ वैश्यस्य पर्ववर्ज्यं विधारणम्' ॥ इति । तथा वस्त्रविशेषकृतश्च प्रतिप्रसवः—'कम्बले पट्टसूत्रे च नीलीरागो न दुष्यति' ॥ इति स्मरणात् । ब्रह्मतरुनिर्मितखट्वाद्यारोहणे शङ्ख आह—अध्यस्य शयनं यानमासनं पादुके तथा । द्विजः पलाशवृक्षस्य त्रिरात्रं तु व्रती भवेत् ॥ क्षत्रियस्तु रणे पृष्ठं दत्त्वा प्राणपरायणः । संवत्सरं व्रतं कुर्याच्छित्त्वा वृक्षं फलप्रदम् ॥ द्वौ विप्रौ ब्राह्मणाग्नी वा दम्पती गोद्विजोत्तमौ । अन्तरेण यदा गच्छेत्कृच्छ्रं सान्तपनं चरेत् ॥ होमकाले तथा दोहे स्वाध्याये दारसङ्ग्रहे । अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेत्' ॥ इति । दोहे साम्नाय्याद्यङ्गभूते । एतच्चाभ्यासविषयम् । सच्छिद्रादित्याद्यरिष्टदर्शनादौ शङ्ख आह—'दुःस्वप्नारिष्टदर्शनादौ घृतं सुवर्णं च दद्यात्' इति ॥

क्वचिद्देशविशेषगमनेऽपि देवल आह—'सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्ग(३)वङ्गकलिङ्गान्ध्रान् गत्वा संस्कारमर्हति' । एतच्च तीर्थयात्राव्यतिरेकेण द्रष्टव्यम् । स्वपुरीषदर्शनादौ यम आह—'प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् । दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा' ॥ इति । शङ्खोऽप्याह—'पादप्रतपनं

(१) त्रिवर्णेषु च सामान्य ढ । (२) भवेद्विप्रे त्रिभि ढ ।
(३) अङ्गवङ्गकालिङ्गांश्च ।

कृत्वा कृत्वा वन्हिमधस्तथा । कुशैः प्रमृज्य पादौ तु दिनमेकं व्रती भवेत्' ॥ इति । क्षत्रियाद्युपसंग्रहणे हारीत आह—'क्षत्रियाभिवादनेऽहोरात्रमुपवसेत्, वैश्याभिवादने द्विरात्रम्, शूद्रस्याभिवादने त्रिरात्रमुपवासः' इति । तथा 'शय्यारूढपादुकोपानहारोपितपादोच्छिष्टान्धकारस्थश्राद्धकृज्जपदेवपूजानिरताभिवादने त्रिरात्रमुपवासः स्यादन्यत्र निमन्त्रितेनान्यत्र भोजनेऽपि त्रिरात्रम्' इति ॥

समित्पुष्पादिहस्तस्याभिवादनेऽप्येतदेव —'समित्पुष्पकुशाज्याम्बुमृदन्नाक्षतपाणिकम् । जप होमं च कुर्वाणं नाभिवादेत वै द्विजम्'॥ इत्यापस्तम्बीये जपादिभिः समभिव्याहारात् । अभिवादकस्यापीदमेव प्रायश्चित्तम्—'नोदकुम्भहस्तोऽभिवादयेत् न भैक्षं चरेन्न पुष्पाज्यादिहस्तो नाशुचिर्न जपन्न देवपितृकार्यं कुर्वन्न शयानः' इति तस्यापि शङ्खेन प्रतिषेधात् । एवमन्यान्यपि वचांसि स्मृत्यन्तरतोऽन्वेष्याणि ग्रन्थगौरवभयादत्र न लिख्यन्ते ॥ २९२ ॥

इति प्रकीर्णकप्रायश्चित्तप्रकरणम् ।

---

( वी०मि० ) निमित्तानामानन्त्येन प्रतिव्यक्ति वक्तुमशक्यत्वादनुक्तप्रायश्चित्तेषु पापेषु सामान्यतः प्रायश्चित्तकल्पमाह—

देशं कालं वयः शक्तिं पापं चाऽवेक्ष्य यत्नतः ॥
प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः ॥२९३॥

उक्तप्रायश्चित्त(१)पापस्य न्यूनमधिकं सम वा देशादिकं यत्नतोऽवेक्ष्य विशिष्याऽनुक्तनिष्कृतिविशेषे न्यूनाधिकसमप्रायश्चित्तानि कल्प्यानि । चकाराभ्यां ज्ञानाऽज्ञानाकृतत्वसमुच्चय ॥ २९३ ॥

( मिता० ) निमित्तानामानन्त्यात्प्रतिव्यक्तिप्रायश्चि(२)त्तस्य वक्तुमशक्यत्वात्सामान्येनोपदिष्टानुपदिष्टविषये प्रायश्चित्तविशेषज्ञानार्थमिदमाह—

देशमिति । यदुक्तं प्रायश्चित्तजातं वक्ष्यमाणं वा तद्देशादिकमवेक्ष्य यथा कर्तुः प्राणविपत्तिर्न भवति तथा विषयविशेषे कल्पनीयम् । इतरथा प्रधाननिवृत्तिप्रसङ्गात् । तथा च वक्ष्यति—'वायुभक्षो दिवा तिष्ठन्रात्रिं नीत्वाप्सु सूर्यदृक्' इति, तत्र यदि हिमवद्गिरिनिकटवर्ति-

---

( १ ) उक्तप्रायश्चित्तकन्यस्य—इति ख० पु० पाठः । ( २ ) प्रायश्चित्तनिमित्तस्य ग ।

नामुद(१)कवास उपदिश्यते-अतिशीताकुलिते वा शिशिरादिकाले तदा प्राणवियोगो भवेदिति तद्देशकालपरिहारेणोद(१)कवासः कल्पनीयः । तथा वयोविशेषादपि यदि नवतिवार्षिकादेरपूर्णद्वादशवार्षिकस्य वा (२)द्वादशाब्दिकं प्रायश्चित्तमुपदिश्यते तदा प्राणा विपद्येरन्निति ततोऽन्यवयस्के तत्प्रायश्चित्तं कल्प्यम् । अत एव स्मृत्यन्तरे 'क्वचिदर्धं क्वचित्पादः' इति वृद्धादिषु प्रायश्चित्तस्य ह्रासोऽभिहितः, तच्च प्राक्प्रपञ्चितम् । तथा धनदानतपश्चरणादिशक्त्यपेक्षया च । न हि निर्धनस्य पात्रे धनं वा पर्याप्तमित्याद्युपपद्यते । तथोद्रिक्तपित्तादेर्वा पराकादिकं नापि स्त्रीशूद्रादेर्जपादिकम् । अत एव 'गजादीनामशक्नुवन् । दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये' इत्युक्तम् । तथा 'प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च' इति तपस्यशक्तस्य स्मृत्यन्तरे प्रायश्चित्तस्य ह्रासोऽभिहितः । तथा पापं च महापातकादिरूपेण सप्रत्ययाप्रत्ययसकृदभ्यासादिरूपेण चावेक्ष्य यत्नतः सकलधर्मशास्त्रपर्यालोचनया प्रायश्चित्तं कल्पनीयम् । तत्राकामतो यद्विहितं तदेव कामकृते द्विगुणं कामतोऽभ्यासे चतुर्गुणमित्येवं स्मृत्यन्तरानुसारेण कल्पनीयम् । तथा-'महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् । अब्भक्षो मासमासीत' इत्युक्त, तत्र महापापोपपापयोस्तुल्यप्रायश्चित्तस्यायुक्तत्वान्महापापापेक्षयोपपातके मासिकव्रतस्य ह्रासः कल्पनीयः । यत्र च हसितजृम्भि(३)ताक्रन्दितास्फालनादि नाकस्मात्कुर्यात् । तथा—'नोदन्वतोऽम्भसि स्नायान्न च श्मश्र्वादि कर्तयेत् । अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवम्'॥ इत्यादौ प्रायश्चित्तं नोपादिष्टं तत्रापि देशाद्यपेक्षया प्रायश्चित्त कल्प्यम् । ननु न किञ्चिदपि निमित्तजातमनुक्तनिष्कृतिकमुपलभ्यते—'प्राणायामशतं कार्यं सर्वपापापनुत्तये । उपपातकजातानामनादिष्टस्य चैव हि' ॥ इत्यनुक्तनिष्कृतिष्वपि प्रायश्चित्तस्य वक्ष्यमाणत्वात् । गौतमेनाप्येतान्येवानादेशे विकल्पेन क्रियेरन्नित्येकाहादयः प्रतिपादिताः । उच्यते—सत्यमस्त्येव सामान्यतः प्रायश्चित्तोपदेशस्तथापि सर्वत्र देशकालादीनामपेक्षितत्वादस्त्येव कल्पनावसरः । न च हसितादिषु सर्वत्र प्राणायामशतं युक्तम् । निमित्तस्य लघुत्वात् । अतः पापा·

(१) उदवास क । (२) द्वादशवार्षिकादिकं ङ ।
(३) जृम्भितास्फोटनानि ङ ।

पेक्षया ह्रासः कल्पनीयः प्रायश्चित्तान्तरं वा । ननु कथं पापस्य लघुत्वं येन प्रायश्चित्तस्य ह्रासकल्पना स्यात् । न च प्रायश्चित्तात्पत्वादिति वाच्यम् । अनुक्तनिष्कृतित्वादेव । सत्यम्, किन्तु अर्थवादसंकीर्तनाद् बुद्धिपूर्वाबुद्धिपूर्वानुबन्धाद्यपेक्षया च सुबोध एव दोषस्य गुरुलघुभावः । तथा दण्डह्रासवृद्ध्यपेक्षया च प्रायश्चित्तगुरुलघुभावः । यथा ब्राह्मणावगोरणादौ सजातीयविषये प्राजापत्यादिकमुक्तम्, तत्र यदा चानुलोम्येन प्रातिलोम्येन वाऽवगोरणादि क्रियते, तदा मूर्धावसिक्तादिदण्डतारतम्यदर्श(१)नादेव दोषाल्पत्वमहत्त्वावगमात्प्रायश्चित्तस्यापि गुरुलघुभावः कल्पनीयः । दर्शितश्च दण्डस्य गुरुलघुभावः 'प्रातिलोम्यापवादेषु द्विगुणस्त्रिगुणो दमः' इत्यादिना ॥ २९३ ॥

(वी०मि०) महापातकिनां प्रायश्चित्तेन व्यवहार्यत्वमुक्तम्, यदि त्वौद्धत्यात्पतितो न प्रायश्चित्तं करोति तदा किं कार्यमत आह—

दासीकुम्भं बहिर्ग्रामान्निनयेरन् स्वबान्धवाः ॥
पतितस्य बहिः कुर्युः सर्वकार्येषु चैव तम् ॥ २९४ ॥
चरितव्रत आयाते निनयेरन्नवं घटम् ॥
जु(२)गुप्सेरन्न चाऽप्येनं संविशेयुश्च सर्वशः ॥ २९५ ॥
पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः ॥
वासो गृहान्तिके देयमन्नं वासः सरक्षणम् ॥ २९६ ॥

दा(३)स्याः सपिण्डैः प्रेरितयाऽऽनीतं जलपूर्णं कुम्भं ग्रामाद्बहिः पतितस्य स्वाज्ञातयो बान्धवा मातुलादयश्च निनयेरन् पर्यस्येर(४)न् । चकारेण दास्येव वा सपिण्डादिप्रयुक्ता घटं निनयेदिति समुच्चीयते ।

दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा ।
अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह ॥

इति मनुवचनात् । गौतम —'पात्रमानीय घटात् पूरयित्वा दक्षिणाभिमुखो यदा विपर्यस्येदमुमनुदकं करोमीति नामग्राहं तं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसम्बन्धा-

(१) दर्शनादोषाल्पत्व घ । (२) जुगुप्सेयु —इति क० पु० पाठः ।
(३) पतितानीत—इति घ० पु० पाठः । (४) पर्यवस्येरन्—इति ख० पु० पाठः ।

श्च वीक्षेरन्नप उपस्पृश्य ग्रामं प्रविशेयुः'। एवं कुम्भाऽपवर्जनानन्तरं पतितं सर्वकार्येषु विवाहसम्भाषणस्नेहा(१)सनश्राद्धशौचादिषु वहिः कुर्युः। एवकारेण स्नेहानुबन्धमपि व्यवच्छिनत्ति। यदि तु बन्धुत्यागादन्यथा वा जातवैराग्यः अकामकृते महापातके प्रायश्चित्तं पतितः परित्यक्तः करोति तदा त्वाह चरितेति। प्रायश्चित्तं कृत्वा समागते तस्मिन् नवं घटं जलपूर्णं निनयेरन् बान्धवाः, न च तं निन्देयुः सहाचनं च तेन कुर्युः सर्वे। आद्येन चकारेणाऽवमानं सङ्गृहीतं निषेधति। द्वितीयेन विवाहाऽऽशौचादिव्यवहारसमुच्चयः। अपिकारेण नवघटनिनयातिकर्तव्यतासमुच्चयः। तदाह गौतमः—'यस्तु प्रायश्चितेन शुध्येत्तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यतमात् ह्रदात् पूरयित्वा स्रवन्तीभ्यो वा तत एनमुपस्पर्शयेयुरथाऽस्मै तत्पात्रं दद्युस्तत्सम्प्रतिगृह्य जपेत्—'शान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो रोचनस्तमिह गृह्णामी'-त्येतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिः कूष्माण्डैश्चाऽऽज्यं जुहुयाद्धिरण्यं दद्याद्गां चाऽऽचार्याय। यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येदेतदेव शान्त्युदकं सर्वेषूपपातकेषु। पुरुषस्य पतितस्य परित्यागविधिः स्त्रीणां पतितानामतिदिशति पतितानामिति। एष परित्यागस्य प्रायश्चित्तान्तरसङ्ग्रहस्य च विधिः प्रकारः पतितानां स्त्रीणां मुनिभिः परिकीर्तित। (२)इयांस्तु विशेषः—ऋतुनिनयानन्तरमपि स्त्रीणां स्वगृहनिकटे वासो देयः, अन्नं वस्त्रं व्यभिचारसंरक्षणपूर्वकं देयम्॥ २९४—२९६॥

(मिता०) एवं महापातकादिभिः पतितस्य प्रायश्चित्तमुक्तं, यस्त्वौद्धत्यादेतन्न चिकीर्षति तस्य किं कार्यमित्यत आह—

दासीकुम्भमिति। जीवत एव पतितस्य ये स्वा ज्ञातयो बान्धवा मातृपक्षास्ते सर्वे सन्निपत्य दासी प्रेष्या, तया सपिण्डादिप्रेषितया आनीतमपां पूर्णं कुम्भं घटं ग्रामाद्बहिर्निनयेयुः। एतच्चतुर्थ्यादिरिक्तातिथिष्वह्नः पञ्चमे भागे गुर्वादिसंनिधौ कार्यम्। (११।१८२)-'पतितस्योदकं कार्यं सपिण्डैर्बा(३)न्धवैर्बहिः। निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ'॥ इति मनुस्मरणात्। अथवा दास्येव सपि-

(१) स्नेहासन—इति नास्ति ख० पुस्तके। (२) अथ तु—इति क० पु० पाठ।
(३) बान्धवैः सह ङ।

ण्डादिप्रयुक्ता निनयेत् । यथाह मनुः ( ११।१८३ )—'दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा । अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह' ॥ इति । प्रेतवदिति दक्षिणामुखापसव्ययोः प्राप्त्यर्थम् । तच्च निनयनमुदकपिण्डदानादिप्रेतक्रियोत्तरकालं द्रष्टव्यम् । 'तस्य विद्यागुरून् योनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादीनि प्रेतकर्माणि कुर्युः पात्रं चास्य विप(१)र्यस्येयुः दासः कर्मकरो वाऽवकरात् पात्रमानीय दासीघटात् पूरयित्वा दक्षिणाभिमुखः पदा विपर्यस्येत् अमुमनुदकं करोमि इति नामग्राहं तं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसम्बन्धाश्च वीक्षेरन् अप उपस्पृश्य ग्रामं प्रविशेयु' इति गौतमस्मरणात् । अयं च त्यागो यदि बन्धुभिः प्रेर्यमाणोऽपि प्रायश्चित्तं न करोति तदा द्रष्टव्यः । तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्यानुभाष्य पुनः पुनराचारं लभस्वेति, स यद्येवमप्यनवस्थितमतिः स्यात्ततोऽस्य पात्रं विपर्यस्येदिति शङ्खस्मरणात् । ततस्तं लब्धोदकं पतितं सर्वकार्येषु सम्भाषणसहासनादिषु बहिः कुर्युर्वर्जयेयुः । तथा च मनुः ( ११।१८४ )—'निवर्तेरंस्ततस्तस्मात्सम्भाषणसहासने । दायाद्यस्य प्रदानं च यात्रामेव च लौकिकीम्' ॥ इति । यदि स्नेहादिना सम्भाषणं करोति तदा प्रायश्चित्तं कार्यम् । 'अत ऊर्ध्वं तेन सम्भाष्य तिष्ठेदेकरात्रं जपन्सावित्रीमज्ञानपूर्वं ज्ञानपूर्वं चेत्त्रिरात्र'मिति ॥ २९४ ॥

( मिता० ) यदा तु बन्धुत्यागादन्यथा वा जातवैराग्यः प्रायश्चित्तमकृत, तदा किं कार्यमित्यत आह—

चरितेति । कृतप्रायश्चित्ते बन्धुसमीपं पुनरायाते तत्सपिण्डाद्यास्तेन सहिता नवमनुपहतं घटम् उदकपूर्णं निनयेयुः । एतच्च निनयनं पुण्यह्रदादिस्नानोत्तरकालं द्रष्टव्यम् । ( ११।१८६ )—'प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवम् । तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये' ॥ इति मनुस्मरणात् । गौतमेन तु विशेष उक्तः— 'यस्तु प्रायश्चित्तेन शुध्येत्तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यतमात् ह्रदात्पूरयित्वा स्रवन्तीभ्यो वा तत एनमप उपस्पर्शयेयुरथास्मै तत्पात्रं दद्युस्तत्संप्रतिगृह्य जपेत्—'शान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो रोचनस्तमिह गृह्णामि' इत्येतैर्यजुर्भिः

(१) विपरिर्दिधेयु ट ।

पावमानीभिस्तरत्समन्दीभिः कूष्माण्डैश्चाज्यं जुहुयाद्धिरण्यं दद्याद्गां चाचार्याय। यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत्। तदेव शान्त्युदकं सर्वेषूपपातकेषु' इति। तत एवं कृतप्रायश्चित्तं ते नैव कुत्सयेयुः तथा सर्वकार्येषु क्रयविक्रयादिषु तेन सह संव्यवहरेयुः॥ २९५॥

( मिता० ) पूर्वोक्तस्य पतितपरित्यागादिविधेरतिदेशमाह—

पतितानामिति। य एव पुरुषाणां परित्यागे पिण्डोदकदानविधिः कृतप्रायश्चित्तानां परिग्रहविधिश्च स एव स्त्रीणामपि पतितानां वेदितव्यः। इयांस्तु विशेषः—पतिताभ्योऽपि ताभ्यः ( स्त्रीभ्यः ) कृतोदकादिकर्मभ्यो वासस्तृणपर्णमयं कुटीगृहकं प्रधानगृहसमीपे देयम्। तथा प्राणधारणमात्रमन्नं मलिनं च वस्त्रं पुनः पुरुषान्तरोपभोगनिवारणसहितं सन्यक्कारं देयम्॥ २९६॥

( वी०मि० ) स्त्रीणां न केवलं ब्रह्मवधादीन्येव पञ्च महापातकानि उपपातकानि च कुम्भापवर्जननिमित्ते पतनबीजानि किन्त्वन्यान्यपीत्याह—

नीचाभिगमनं गर्भपातनं भर्तृहिंसनम्॥
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्॥ २९७॥

हीनवर्णव्यभिचारित्वं ब्राह्मणव्यतिरिक्तस्यापि गर्भस्य भर्तुर्वा हिंसनं स्त्रीणामेतान्यपि पुरुषादसाधारणानि पतनीयानि ध्रुवं निश्चितं भवन्ति। अपिकारेण पुरुषपतननिमित्तसमुच्चयः॥ २९७॥

( मिता० ) ननु काः पतिता यासामयं परित्यागविधिरित्यत आह—

नीचाभिगमनमिति। हीनवर्णगमनं गर्भपातनमब्राह्मण्या अपि भर्तुः अब्राह्मणस्यापि हिंसनमित्येतानि स्त्रीणामसाधारणानि पतननिमित्तानि। अपिशब्दात्पुरुषस्य यानि पतननिमित्तानि महापातकातिपातकानुपातकान्यभ्यस्तानि चोपपातकादीनि तान्यपि स्त्रीणां ध्रुवं निश्चितं पतनकारणानि भवन्ति। अत एव शौनकः—'पुरुषस्य यानि पतननिमित्तानि स्त्रीणामपि तान्येव, ब्राह्मणी हीनवर्णसेवायामधिकं पतति' इति। यत्तु वासिष्ठेन—'त्रीणि स्त्रियाः पातकानि लोके धर्मविदो विदुः। भर्तुर्वधो भ्रूणहत्या स्वस्य गर्भस्य पातनम्'॥ इति भ्रूणहत्याग्रहणं कृतं, तद् दृष्टान्तार्थं न पुनरितरेषां महा

पातकादीनां पतनहेतुत्वनिरासार्थम् । यदपि तेनैव—'चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या। पतिघ्नी च विशेषेण जुङ्गितोपगता च या' ॥ इति चतसृणामेव परित्याग इत्युक्तं तथापि तासां प्रायश्चित्तमचिकीर्षन्तीनां मध्ये चतसृणामेव शिष्यगादीनां चैलान्नगृहवासादिजीवनहेतुत्वाद्युच्छेदेन त्यागं कुर्यान्नान्यासामित्यभिप्रायः । अतश्चान्यासां पतितानां प्रायश्चित्तमकुर्वतीनामपि वासो गृहान्तिके देयमित्यादिकं कर्तव्यमित्यवगम्यते ॥ २९७ ॥

( वी०मि० ) 'चरितव्रत आयात' इत्याद्युक्तमपवदति—

शरणागतबालस्त्रीहिंसकान् संवसेन्नतु ॥
चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् ॥ २९८ ॥

शरणागतहिंसकादींस्तु कृतघ्नसहितान् कृतघटापवर्जनप्रायश्चित्तानपि सतः न संवसेन्न व्यवहरेदित्यर्थः ॥ २९८ ॥

( मिता० ) 'जुगुप्सेरन्न चाप्येनं संविशेयुश्च सर्वश' इत्यस्यापवादमाह—

शरणेति । शरणागतादिव्यापादनकारिणः कृतघ्नसहितान्प्रायश्चित्तेन क्षीणदोषानपि न संव्यवहरेदिति वाचनिकोऽयं प्रतिषेधः, किमिति वचन न कुर्यात्, न हि वचनस्यातिभारोऽस्ति, अतश्च यद्यपि व्यभिचारिणीनां वधेऽल्पीय एव प्रायश्चित्तं, तथापि वाचनिकोऽयं संव्यवहारप्रतिषेधः ॥ २९८ ॥

( वी०मि० ) प्रायश्चित्तानन्तरं घटं निनयते तस्य कृत्यमाह—

घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम् ॥
प्रदद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥ २९९ ॥

यवसं घासं गवामर्थे प्रदद्यात् । हि यतस्तद्दत्तघासभक्षणेन प्रथमं गोभिः सत्कृतस्य ज्ञात्यादिभिः सत्क्रिया कर्तव्या । गोभिर्घासस्याऽभक्षणे पुनः प्रायश्चित्तं कारयेदिति भावः ॥ २९९ ॥

( मिता० ) एवं प्रसङ्गेन स्त्रीषु विशेषमभिधाय प्रकृत एव चरितव्रतविधौ विशेषमाह—

घटे इति । घटेऽपवर्जिते ह्रदादुद्धृत्य पूर्णे कुम्भेऽवनिनीतेऽसौ चरितव्रतः सपिण्डादिमध्यस्थो गोभ्यो यवसं दद्यात् । ताभिः प्रथमं सत्कृतस्य पूजितस्य पश्चाज्ज्ञातिभिः सत्क्रिया कार्या । गोभिश्च

तस्य सत्कारस्तद्दत्तयवसभक्षणमेव । यदि गावस्तद्दत्त यवसं न गृह्णीयुस्तर्हि पुनः प्रायश्चित्तमनुतिष्ठेत् । यदाह हारीतः—'स्वशिरसा यवसमादाय गोभ्यो दद्याद्यदि ताः प्रतिगृह्णीयुरथैनं प्रवर्तयेयुः, इतरथा नेत्यभिप्रेतम्' ॥ २९९ ॥

( वी०मि० ) एवं पापानि प्रायश्चित्तसहितान्यभिधाय प्रायश्चित्तपूर्वकृत्यमाह—

विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् ॥
अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥ ३०० ॥

परज्ञातदोषस्त्र्यवरवेदप्रायश्चित्तविज्ञब्राह्मणसमुदायात्मकस्य पर्षदः समीपमागत्य तदनुमतं व्रतं प्रायाश्चित्तं कुर्वीत । परैरज्ञातदोषस्तु रहस्यमप्रकाश प्रायाश्चित्तमाचरेत् ॥ ३०० ॥

( मिता० ) महापातकादिपञ्चविधेऽपि दोषगणे प्रातिस्विकव्रतसन्दोहमभिधायाऽधुना सकलव्रतसाधारण धर्ममाह—

विख्यातदोप इति । यो दोपो यावत्कर्तृसम्पाद्यस्ततोऽन्यैर्विख्यातो विज्ञातो दोषो यस्यासौ पर्पदुपदिष्टं व्रतं कुर्यात् । यद्यपि स्वयं सकलशास्त्रार्थविचारचतुरस्तथापि पर्षत्समीपमुपगम्य तया सह विचार्य तदनुमतमेव कुर्यात् । तदुपगमने चाङ्गिरसा विशेष उक्तः—'कृते निःसंशये पापे न भुञ्जीतानुपस्थितः । भुञ्जानो वर्धयेत्पापं यावन्नाख्याति पर्षदि ॥ सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः । पर्षदानुमतस्तत्त्वं सर्वं विख्यापयेन्नरः । व्रतमादाय भूयोपि तथा स्नात्वा व्रतं चरेत्' ॥ इति । विख्यापनं च पर्षद्दक्षिणादानानन्तरं कार्यम् । यथाह पराशरः—'पापं विख्यापयेत्पापी दत्त्वा धेनुं तथा वृषम्' इति । एतच्चोपपातकविषयम् । महापातकादिष्वधिकं कल्प्यम् । यत्तूक्तम्—'तस्माद्द्विजः प्राप्तपापः सकृदाप्लुत्य वारिणि । विख्या(१)प्य पापं पर्षद्भ्यः किञ्चिद्दत्त्वा व्रतं चरेत्' ॥ इति, तत्प्रकीर्णकविपयम् । पर्षत्स्वरूपं च मनुना दर्शितम्—'त्रैविद्यो हैतुकस्तर्की नै(२)रुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरा' ॥ हैतुको मीमांसार्थादितत्त्वज्ञः । तर्की न्यायशास्त्रकुशलः । तथान्यदपि पर्षद्द्वयं तेनैव दर्शितम्—'ऋग्वेदविद्यजुर्विच्च सा-

( १ ) विख्यातपाप वक्तृभ्य इति क । ( २ ) निरुक्तो क ।

मवेदविदेव च । अपरा पर्षद्विज्ञेया धर्मसंशयनिर्णये' ॥ इति । तथा—'ए(१)कोऽपि वेदविद्धर्मं यं व्यवस्येत्समाहितः । स ज्ञेयः परमो धर्मो नाज्ञानामुदितोऽयुतैः' ॥ इति । कासां च पर्षदां सम्भवापेक्षया व्यवस्था महापातकाद्यपेक्षया वा । यत्तु स्मृत्यन्तरेऽभिहितम्—'पातकेषु शत पर्षत्सहस्रं महदादिषु । उपपापेषु पञ्चाशत्स्वल्प स्वल्पे तथा भवेत्' ॥ इति, तदपि महापातकादिदोषानुसारेण पर्षदो गुरुलघुभावप्रतिपादनपरं न पुनः संख्यानियमार्थम् । मन्वादि महास्मृतिविरोधप्रसङ्गात् । तथा देवलेन चात्र विशेषो दर्शितः—'स्वयं तु ब्राह्मणा ब्रूयुरल्पदोषेषु निष्कृतिम् । राजा च ब्राह्मणाश्चैव महत्सु च परीक्षितम्' ॥ इति । (२)तया च पर्षदा अवश्य व्रतमुपदेष्टव्यम्—'आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः । जानन्तो न प्रयच्छन्ति ते यान्ति समतां तु तैः' ॥ इत्यङ्गिरःस्मरणात् । (३)तया पर्षदा ज्ञात्वैव व्रतमुपदेष्टव्यम—'अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः । प्रायश्चित्ती भवेत्पूतः किल्बिषं पर्षदं व्रजेत्' ॥ इति वसिष्ठस्मरणात् । क्षत्रियादीनां तु कृतैनसां धर्मोपदेशे विशेषोऽङ्गिरसा दर्शितः—'न्यायतो ब्राह्मण क्षिप्रं क्षत्रियादेः कृतैनसः । अन्तरा ब्राह्मणं कृत्वा व्रतं सर्वं समादिशेत् ॥ तथा शूद्रं समासाद्य सदा धर्मपुरःसरम् । प्रायश्चित्त प्रदातव्यं जपहोमविवर्जितम्' ॥ इति । तत्र च यागाद्यनुष्ठानशीलानां जपादिक वाच्यम् । इतरेषां तु तपः । 'कर्मनिष्ठास्तपोनिष्ठाः कदाचित्पापमागताः । जपहोमादिकं तेभ्यो विशेषेण प्रदीयते ॥ ये नामधारका विप्रा मूर्खा धनविवर्जिताः । कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः' ॥ इति ॥

इति प्रकाशप्रायश्चित्तप्रकरणम् ।

---

( मिता० ) व्याख्याय ख्यातदुरितशातनीं व्रतसन्ततिम् ।
रहःकृताघसन्दोहहारिणीं व्याहरन्मुनिः ॥

तत्र प्रथमं सकलरहस्यव्रतसाधारणं धर्ममाह—

अनभिख्यातदोष इति । कर्तृव्यतिरिक्तैरनभिख्यातो दोषो यस्या-

---

( १ ) एकोऽपि धर्मविद्धर्ममिति पाठ ।

( २ ) तया च पर्षदा घ ।

( ३ ) तथा च छ ।

सौ रहस्यमप्रकाशं प्रायश्चित्तमनुतिष्ठेत् । अतः स्त्रीसम्भोगादौ तस्या अपि कारकत्वात् तदितरैराविज्ञातदोषस्य रहस्यव्रतमिति मन्तव्यम् । अत्र यदि कर्ता स्वयं धर्मशास्त्रकुशलस्तदा परस्मिन्नविभाव्य स्वनिमित्तोचितं प्रायश्चित्तमनुतिष्ठेत् । यस्तु स्वयमनभिज्ञोऽसौ केनचिद्द्विजो ब्रह्महत्यादिकं कृतं तत्र किं रहस्यप्रायश्चित्तमित्यन्यव्याजेनावगम्य रहोव्रतमनुतिष्ठेत् । अत एव स्त्रीशूद्रयोरप्यमुनैव मार्गेण रहस्यव्रतज्ञानसिद्धेरधिकारसिद्धिः । न च वाच्यं रहस्यव्रतानां जपादिप्रधानत्वादविद्ययोश्च स्त्रीशूद्रयोस्तदनुपपत्तेरनधिकार इति । यतोऽनैकान्ततो रहस्यव्रतानां जपादिप्रधानत्वम् । दानादेरप्युपदेशात्, गौतमोक्तप्राणायामादेरपि सम्भवाच्च । इतरेषामपि मन्त्रदैवतर्षिच्छन्दःपरिज्ञानमात्रमेवाऽधिकारोपयोगि न त्वन्यविषयम् । न हि तडागनिर्माणादौ ज्योतिष्टोमादिविषयिणी प्रतिपत्तिरुपयुज्यते । देवतादिपरिज्ञानं त्ववश्यमपेक्षणीयम् । 'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च । योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः' ॥ इति व्यासस्मरणात् । अत्राप्याहारविशेषानुक्तौ पयःप्रभृतयः, कालविशेषानुक्तौ संवत्सरादयः, देशविशेषानुक्तौ शिलोच्चयादयो गौतमाद्यभिहिता प्रकाशप्रायश्चित्तवदन्वेषणीयाः ॥ ३०० ॥

( वी० मि० ) रहस्यकृतेषु पापेषु पूर्वोक्तमेव व्रतं कार्यं नेत्याह—

त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ॥
अन्तर्जले विशुद्ध्येत गां दत्त्वा च पयस्विनीम् ॥३०१॥

लोमभ्यः स्वाहेत्यथ वा दिवसं मारुताशनः ॥
जले स्थित्वाऽभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ ३०२ ॥

त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्घृतं शुचिः ॥
ब्राह्मणस्वर्णहारी तु रुद्रजापी जले स्थितः ॥ ३०३ ॥

सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः ॥
गौर्देया कर्मणोऽस्याऽन्ते पृथगेभिः पयस्विनी ॥ ३०४ ॥

प्राणायामशतं कार्यं सर्वपापापनुत्तये ॥
उपपातकजातानामनादिष्टस्य चैव हि ॥ ३०५ ॥

ओङ्काराभिष्टुतं सो(१)मं सलिलं पावनं पिबेत् ॥
कृत्वा हि रेतोविण्मूत्रप्राशनं तु द्विजोत्तमः ॥ ३०६ ॥
निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ॥
त्रैकाल्यसन्ध्याकरणात्तत्सर्वं विप्रणश्यति ॥ ३०७ ॥
शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः ॥
सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥ ३०८ ॥
यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः ॥
तत्र तत्र तिलैर्होमो गायत्र्या वाचनं तथा ॥ ३०९ ॥
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ॥
न स्पृशन्तीह पापानि महापातकजान्यपि ॥ ३१० ॥
वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाऽप्सु सूर्यदृक् ॥
जप्त्वा सहस्रं गायत्र्याः शुद्ध्येद्ब्रह्मवधादृते ॥ ३११ ॥

ब्रह्महा यः स त्रिरात्रोपोषणानन्तरं जलमध्येऽघमर्षणसूक्तं त्रिर्जप्त्वा पयस्विनीं गां च तदु(२)त्तरं दत्त्वा शुद्ध्यति । यद्वा दिवसमहोरात्रमेकं मारुताशन उपोषितः सन् जले स्थित्वा प्रातर्जलादुत्तीर्य 'लोमभ्यः स्वाहे'त्याद्यष्टभिर्मन्त्रैरेकैकेन पञ्च पञ्चाऽऽहुतय इत्येवं चत्वारिंशत् घृताहुतीर्जुहुयात् । तत्र जलवासात्क्लेशात् त्रिरात्रोपवाससाम्यम् । सुरापस्तु त्रिरात्रोपोषितः कूष्माण्डीभिर्घृतं चत्वारिंशदाहुतीर्हुत्वा शुचिर्भवति । ब्राह्मणस्वर्णहारी तु त्रिरात्रोपोषितो जलमध्यस्थो 'नमस्ते रुद्र मन्यव' इति शतरुद्रियजपं कृत्वा शुचिर्भवति । गुरुतल्पगतस्तु 'सहस्रशीर्षा'जपशीलः पापान्मुच्यते । अत्र ताच्छील्ये णिनिप्रत्ययादावृत्तिर्गम्यते ।

पौरुषं सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात् ।

आवृत्तौ च सङ्ख्याकाङ्क्षायां चत्वारिंशत्सङ्ख्याऽनुमी(३)यते । संसर्गप्रायश्चित्तं ब्रह्मवधादिप्रायश्चित्तैरेव व्याख्यातम् । एभिः सुरा(४)पायिसुवर्णस्तेयिगुरुतल्पगैः प्रत्येकं कर्मणोऽस्य प्रायश्चित्तरूप·

(१) सोमसलिलं—इति मुद्रितपुस्तकपाठः । (२) तदनन्तरं—इति ख० पु० पाठः ।
(३) चत्वारिंशत्सङ्ख्याऽन्वीयते—इति क० पु० पाठः ।
(४) सुरापायि—इत्यारभ्य गोवधादिभिः—इत्यन्तो भागः ख० पुस्तके नोपलभ्यते ।

स्याऽन्ते पयस्विनी गौर्देया ब्राह्मणायेति । उपपातकैर्गोवधादिभिर्जातानां सर्वेषां पापानामपगमाय प्राणायामशतं कार्यम् । चकारान्महापातके प्राणायामानां शतचतुष्टयमतिपातके शतद्वयं समुच्चीयते । एवकारेणाऽल्पतरपापेषु शतसङ्ख्याव्यवच्छेदेनाऽल्पप्राणायामसङ्ख्यामभिप्रैति । 'वाक्चक्षुःश्रोत्रत्वग्घ्राणमनोव्यतिक्रमेषु त्रिभिः प्राणायामैः शुध्यति । शूद्रस्त्रीगमनान्नभोजनेषु पृथक् पृथक् सप्ताहं सप्त सप्त प्राणणायमान् धारये'दित्यादिबौधायनवचनात् । हिशब्दः पादपूरणे । उपपातकजातानामित्यत्राऽपवादमाह–ओङ्कारेति । ब्राह्मणो रेतःप्रभृति प्राशनं कृत्वा ओङ्काराऽभिमन्त्रितं सोमलतारसं शुद्धिसाधनं यथास्यात्तथा पिबेत् । हिशब्दः प्राग्वत् । दिवा रात्रौ वा । अपिकारात् सन्ध्ययोरज्ञानकृतं यत्सर्वं प्रकीर्णकं मानसोपपातकं च प्रातर्मध्याह्नसायङ्कालेषु सन्ध्योपासनान्नश्यति । सकलमहापातकादिसाधारणं प्रायश्चित्तमाह—शुक्रियेति । शुक्रिय 'विश्वानि देव सवित'रित्यादि वाजसनेयपठितम्, आरण्यकम्—'ऋचं वाचं प्रपद्ये' इत्यादि तयोर्जपः, गायत्र्याश्च जपो विशेषतः सङ्ख्याविशेषानुसारेण । रुद्रैकादशिनी एकादशानां रुद्रानुवाकानां समहारस्य जपः । एते प्रत्येकं सर्वपापहराः । विशेषश्च प्रोक्तः शङ्खेन—

> शतजप्ता तु सा देवी सर्वपापप्रणाशिनी ।
> सहस्रजप्ता च तथा पातकेभ्यः प्रमोचनी ॥
> दशसाहस्रजाप्येन सर्वकल्मषनाशिनी ।
> लक्षजप्ता तु सा देवी महापातकनाशिनी ॥

यत्तु चतुर्विंशतिमते—

> गायत्र्यास्तु जपन् कोटिं ब्रह्महत्यां व्यपोहति ।
> लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥
> पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः ।
> गायत्र्या लक्षषष्ट्या तु मुच्यते गुरुतल्पगः ॥

इत्युक्त, तद्गुरुत्वात्प्रकाशकृतमहापातकपरम् । चकारेणाऽघमर्षणजपादीनां समुच्चय. । हिशब्दः प्राग्वत्, निश्चयपरत्वेन सन्दिग्धपापव्यवच्छेदार्थो वा । सन्दिग्धपापसाधारणं प्रायश्चित्तमाह–यत्रेति । यत्र सङ्कीर्णं पापेनाऽऽक्रान्तं मन्यते सन्दिग्धे निश्चिनोति वा तत्र गायत्र्या तिलैर्होमः । तथा वसिष्ठोक्तप्रकारेण वाचनं स्वस्तिवाचनं

तिलप्रतिसहदानपूर्वकं भवति प्रायश्चित्तम्। यम.—

गायत्र्या लक्षहोमेन मुच्यते सर्वपातकैः।

अतिपातकादिषु पादपादह्रासः कल्पनीयः। वसिष्ठ —

वैशाख्यां पौर्णमास्यां (१)तु ब्राह्मणान् सप्त पञ्च वा।
क्षौद्रयुक्तैस्तिलैः कृष्णैर्वार्चयेदथवेतरैः॥
प्रीयतां धर्मराजेति यद्वा मनसि वर्तते।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति॥

इति। चकारेण कृष्णाजिनदान(२)सङ्ग्रहः।

कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम्॥

इति वसिष्ठवचनात्। किञ्च वेदाभ्यासादिरतं पञ्चमहायज्ञानुष्ठानपरं महापातकजान्यपि पापानि इह रहसि अकामकृतानि न स्पृशन्ति, किमुताऽन्यपापानि तादृशानि। वायुभक्षः सोपवासो दिवा दिनम् उर्ध्वं तिष्ठन्नीत्वा रात्रिं चाऽप्सु वसन्नेव नीत्वा प्रातः सूर्यं पश्यन् गायत्रीं सहस्रकृत्वो जप्त्वा ब्रह्मवधातिरिक्ताऽखिलपापात् शुध्यति॥ ३०१—३११॥

( मिता० ) एवं सकलरहस्यसाधारणधर्ममभिधाय प्रकाशप्रायश्चित्तवद्ब्रह्महत्यादिक्रमेणैव रहस्यप्रायश्चित्तान्याह—

त्रिरात्रोपोषित इति। त्रिरात्रमुपोषितोऽन्तर्जलेऽघमर्षणेन महर्षिणा दृष्टं सूक्तम् अघमर्षणम् 'ऋतं च सत्यं च' इति तृचमानुष्टुभं भाववृत्तदेवताकं जप्त्वा त्रिरात्रान्ते पयस्विनीं गां दत्त्वा ब्रह्महा विशुध्यति। जपश्चान्तर्जले निमग्नेन त्रिरावर्तनीयः। यथाह सुमन्तु—'देवद्विजगुरुहन्ताऽप्सु निमग्नोऽघमर्षणं सूक्तं त्रिरावर्तयेत्। मातरं भगिनीं गत्वा मातृष्वसारं स्नुषां सखीं वान्य(३)द्वाऽगम्यागमनं कृत्वाऽघमर्षणमेवाऽन्तर्जले त्रिरावर्त्य तदेतस्मात्पूतो भवति' इति। एतच्चाकामकारविषयम्। यत्तु मनुनोक्तम् ( ११।२४८ )—'सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश। अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः'॥ इति, तदप्यस्मिन्नेव विषये गोदानाशक्तस्य वेदितव्यम्। यत्तु गौतमेन षट्त्रिंशद्रात्रव्रतमुक्त्वोक्तम्—'एतद्व्रतमेव ब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पेषु प्राणायामैः स्नातोऽघमर्षणं जपेत्'

( १ ) न्त्र गत्न ख। ( २ ) कामतो क्ष ख। ( ३ ) वासा सकृद् ख।

इति, तत्का(१)मतोऽसकृद्वधविषयम् । यत्तु बौधायननोक्तम्—'ग्रामात्प्राचीं वोदीचीं दिशमुपनिष्क्रम्य स्नातः शुचिः शुचिवासा उदकान्ते स्थण्डिलमुपलिप्य सकृत्क्लिन्नवासाः(२) गोशकृत्पूतेन पाणिनादित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत । प्रातः शतं मध्याह्ने शतमपराह्णे शतमपरिमितं वोदितेषु नक्षत्रेषु प्रसृतियावकं प्राश्नीयात् । ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते । द्वादशरात्रान्महापातकेभ्यो ब्रह्महत्यासुरापानसुवर्णस्तेयानि वर्जयित्वा एकविंशतिरात्रेण तान्यपि तरतीति तत्कामकारविषयम्, अकामत· श्रोत्रियाचार्यसवनस्थवधविषयं वा । यत्तु मनुनोक्तम् (११।२५८)–'अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् । मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः' ॥ इति, तत्कामतः श्रोत्रियादिवधविषयमितरत्र कामतोऽभ्यासविषयं वा । यत्तु बृहद्विष्णुनोक्तम्—'ब्रह्महत्यां कृत्वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेन्धनेनाग्निं प्रज्वाल्याऽघमर्षणेनाऽष्टसहस्रमाज्याहुतीर्जुहुयात्तत एतस्मात्पूतो भवति' इति, तन्निर्गुणवधविषयमनुग्राहकविषयं वा । यत्तु यमेनोक्तम्—'त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः । मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाघमर्षणम्'॥ इति, तद्गुणवतो हन्तुर्निर्गुणवधविषयं प्रयोजकानुमन्तृविषयं वा । यत्तु हारीतेनोक्तम्—'महापातकातिपातकानुपातकोपपातकानामेकतममेव संनिपाते चाघमर्षणमेवं त्रिर्जपेत्' इति, तन्निमित्तकर्तृविषयम् । एवमन्यान्यपि स्मृतिवाक्यान्यान्विष्यैवमेव विषयेषु विभजनीयानि ग्रन्थगौरवभयान्न लिख्यन्ते । एतदेव व्रतजातं यागस्थयोषित्क्षत्रविट्स्वात्रेय्यामाहिताग्निपत्न्यां गर्भिण्यामविज्ञाते च गर्भे व्यापादिते तुरीयांशन्यूनमनुष्ठेयम् ॥ ३०१ ॥

( मिता० ) प्रायश्चित्तान्तरमाह—

लोमभ्य इति । अथवाऽहोरात्रमुपोषितो रात्रावुदके वासं कृत्वा प्रातर्जलादुत्तीर्य लोमभ्यः स्वाहेत्याद्यैरष्टभिर्मन्त्रैरेकैकेन पञ्चपञ्चाहुतय इत्येवं चत्वारिंशद् घृताहुतीर्जुहुयात् । इदं च पूर्वोक्तसमानविषयम् । उदवासस्य क्लेशबाहुल्यात् ॥ ३०२ ॥

( मिता० ) क्रमप्राप्तं सुरापानप्रायश्चित्तमाह—

त्रिरात्रेति । सुरापश्चत्वारिंशद्घृताहुतीरित्यनुवर्तते । त्रिरात्रमु-

---

(१) च—इति ख० पु० पाठः । (२) दान—इति नास्ति ख० पुस्तके ।

पोषितः कूष्माण्डीभिः यद्देवादेवहेडनमित्याद्याभिः कूष्माण्डदृष्टाभिरनुष्टुब्भिर्मन्त्रलिङ्गदेवताभिः ऋग्भिश्चत्वारिंशद्घृताहुतीर्हुत्वा शुचिर्भवेत्। तथा बौधायनेनाप्युक्तम्—'अथ कूष्माण्डीभिर्जुहुयाद्योऽपूत इवात्मानं मन्येत यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते । अयोनौ वा रेतः सिक्त्वान्यत्र स्वप्नात्' इति । यत्तु मनुना (११।२४९)—'कौ(१)त्सं जप्त्वाप इत्येतद्वासिष्ठं च प्रतीत्यृचम्। माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुध्यति' ॥ इति । मासं प्रत्यहं षोडशकृत्वोऽपनःशोशुचदघ प्रतिस्तोमेभिरुषसं वासिष्ठम्। महित्रीणामवोऽस्तु। एतोन्विन्द्रं स्तवामेत्येतेषामन्यतमस्य जप उक्तः, स त्रिरात्रोपवासकूष्माण्डहोमाशक्तस्य वेदितव्यः । एतच्चाकामतः पैष्ट्याः सकृत्पाने, गौडीमाध्व्योस्तु पानावृत्तौ च वेदितव्यम्। यच्च मनुना (११।२५६)—'मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः । सुगुर्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम्' ॥ इति । संवत्सरं प्रत्यहं 'देवकृतस्यैनसः' इत्यादिभिरष्टभिर्मन्त्रैर्होमो 'नम इदुग्रं नम आविवासे' इत्येतस्या ऋचो वा जप उक्तः, स कामकारविषयः । यत्तु—'महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः। अभ्यस्याब्दं पावमानीर्भैक्षाहारो विशुध्यति' ॥ इति, तदभ्यासविषयं, समुच्चितमहापातकविषयं वा ॥

( मिता० ) सुवर्णस्तेयप्रायश्चित्तमाह—

ब्राह्मणेति । ब्राह्मणस्वर्णहारी पुनस्त्रिरात्रोपोषितः जलमध्यस्थो 'नमस्ते रुद्र मन्यव' इति शतरुद्रियजपयुक्तः शुध्यतीति । शातातपेनात्र विशेष उक्तः—'मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्माच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः'॥ इति । जपश्चैकादशकृत्वः कार्यः । 'एकादशगुणान्वापि रुद्रानावर्त्य धर्मवित्। महापापैरपि स्पृष्टो मुच्यते नात्र संशयः'॥ इत्यत्रिस्मरणात्। यत्तु मनुना ( ११:२५० )—'सकृज्जप्त्वास्यवामीयं शिवसङ्कल्पमेव च । सुवर्णमपहृत्यापि क्षणाद्भवति निर्मलः'॥ इति द्विपञ्चाशदृक्संख्याकस्य, 'अस्य वामस्य पलितस्य होतुः' इति सूक्तस्य तथा 'यज्जाग्रतो दूरमुदैतु दैवम्' इति शिवसङ्कल्पदृष्टस्य षड्ऋचस्य वा सकृज्जप उक्त, सोऽत्यन्तनिर्गुणस्वामिकस्वर्णहरणे गुणवतोऽपहर्तुर्द्रष्टव्यः । सुवर्णन्यूनपरिमाणविषयोऽनुग्राहकप्रयोजकविषयो

(१) मास जप्त्वाप इत्येतद्वासिष्ठं च तृच प्रति । माहित्रं शुद्धव । –

वा। आवृत्तौ तु 'महापातकसंयुक्तोऽनुगच्छेत्' इत्यादिनोक्तं द्रष्टव्यम् ॥ ३०३ ॥

( मिता० ) क्रमप्राप्त गुरुतल्पगप्रायश्चित्तमाह—

सहस्रेति । गुरुतल्पगस्तु सहस्रशीर्षेति षोडशर्चंसूक्तं नारायणदृष्टं पुरुषदैवत्यमानुष्टुभं त्रिष्टुवन्तं जपंस्तस्मात्पापान्मुच्यते । सहस्रशीर्षाजापीति ताच्छील्यप्रत्ययादावृत्तिर्गम्यते । अत एव यमेनोक्तम्—'पौरुष सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात्' इति । आवृत्तौ च संख्यापेक्षायामनन्तरश्लोकगता चत्वारिंशत्संख्यानुमीयते । अत्रापि प्राक्तनश्लोकगतं त्रिरात्रोपोषित इति सम्बध्यते । अत एव वृहद्विष्णुः—'त्रिरात्रोपोषितः पुरुषसूक्तजपहोमाभ्यां गुरुतल्पगः शुध्येत्' इति । एभिश्च सुरापसुवर्णस्तेनगुरुतल्पगैस्त्रिभिः पृथक्पृथगस्य त्रिरात्रव्रतस्यान्ते वहुक्षीरा गौर्देया । इदमकामविषयम् । यत्तु मनुना ( ११।२५१ )—'हविष्यान्तीयमभ्यस्य नतमंह इतीति च । जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पग.' ॥ इति । 'हविष्यान्तमजरं स्वर्विदाम्', 'नतमंहोनदुरितम्', 'इति वाइति मे मनः', 'सहस्रशीर्षे'त्येषामन्यतमस्य मासं प्रत्यहं (१)षोडशषोडशकृत्वो जप उक्तः सोऽप्यकामविषय एव । कामतस्तु 'मन्त्रैः शाकलहोमीयैः' इति मनूक्तं द्रष्टव्यम् । यत्तु षट्त्रिंशन्मतेऽभिहितम्—'महाव्याहृतिभिर्होमस्तिलैः कार्यो द्विजन्मना । उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया ॥ महापातकसंयुक्तो लक्षहोमेन शुध्यति' । इति, तदावृत्तिविषयम् । यत्तु यमेनोक्तम्—'जपेद्वाप्यस्यवामीयं पावमानीरथापि वा । कुन्तापं वालखिल्यांश्च निवित्प्रैषान्वृषाकपिम् ॥ होतॄन्रुद्रान्सकृज्जप्त्वा मुच्यते सर्वपातकैः' ॥ इति, तद्व्यभिचारिणीगमनविषयम् । यानि पुनः गुरुतल्पातिदेशविषयाणि तत्समानि वातिपातकोपपातकपदाभिधेयानि तेषु तुरीयांशन्यूनमर्धोनं च क्रमेण वेदितव्यम् । पातकातिपातकानुपातकमहापातकानामेकतमे संनिपाते वा अघमर्षणमेव त्रिर्जपेदिति हारीतोक्तं वा द्रष्टव्यम् । महापातकिसंसर्गिणश्च स तस्यैव व्रतं कुर्यादिति वचनात् येन सह संसर्गस्तदीयमेव प्रायश्चित्तम् । न च वाच्यम्—अत्राध्यापनादिसंसर्गस्यानेककर्तृकसम्पाद्यत्वाद्रहस्यत्वानुपपत्तिरिति । मैवम्—यतः सत्यप्यनेककर्तृत्वे परदारगमनवत् कर्तृव्यतिरिक्ततृतीयाद्यपरि-

(१) षोडशऋचां चत्वारिंशत्संख्याकजप उक्तः ख ।

च्चीयते । अपिकारेण मुनीनामपि याज्ञवल्क्यसूक्तिसम्प्रीतत्वं सूचयति । हिशब्दः पादपूरणे ॥ ३२८-३३४ ॥

इति श्रीसकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरण-
कमलश्रीमन्महाराजाधिराजमधुकरसाहिसूनुश्रीमन्महाराजाऽधि-
राजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकाविकासदिनकर-
श्रीवीरदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूरिसूनु-
सकलविद्यापारावारपारीणधुरीणश्रीमन्मित्रमिश्रकृते
श्रीवीरमित्रोदयाख्याने श्रीयाज्ञवल्क्यव्याख्याने
प्रायश्चित्तप्रकरणं नाम तृतीयोऽध्यायः ॥

समाप्ता वीरमित्रोदयाख्या व्याख्या ।

(मिता०) प्रागुदिताखिलार्थोपसंहारव्याजेन धर्मशास्त्रधारणादिविधीन् सार्थवादान् प्रार्थनावरदानरूपेण प्रतिपादयितुमाह—

श्रुत्वेति । अत्र हि वर्णाश्रमादिव्यावृत्ता धर्माः षट्प्रकाराः प्रतिपादिताः तानखिलान् योगीश्वरभाषितान् ऋषयः श्रुत्वा प्रहर्षोत्फुल्ललोचनास्तं महिमगुणशालिनमचिन्तनीयशक्तिविभवमिदमभिधास्यमानमूचिवांसः ॥ ३२८ ॥

(मिता०) य इदमित्यादि । इत्थमृज्वर्थैः श्लोकैः सामश्रव·प्रभृतयोऽनेकधा प्रार्थयन्तेस्म ॥ ३२९-३३२ ॥

(मिता०) अपरामपि प्रार्थनामाह—

य इदं श्रावयेदिति । यस्त्विदं धर्मशास्त्रं प्रतिपर्वं द्विजान् श्रावयेत् तस्याश्वमेधफलं भवेदिति श्रावणविध्यर्थवादः । तदेतदस्मत्प्रार्थितमर्थं सर्वमत्रभवाननुमन्यताम् ॥ ३३३ ॥

(मिता०) वरदानमाह—

श्रुत्वैतदिति । एतदृषिभिर्भाषितं श्रुत्वा योगीन्द्रोऽपि स्वनिर्मितधर्मशास्त्रधारणादिफलप्रार्थनेोन्मीलितमुखपङ्कजः स्वयंभुवे ब्रह्मणे नमस्कृत्य प्रणम्य भवत्प्रार्थितं सकलमित्थं भवत्वित्येवं किल भगवान् यमाप ॥ ३३४ ॥

इति श्रीभारद्वाजपद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजक-
विज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्र-
विवृतौ प्रायश्चित्ताध्यायस्तृतीयः समाप्तः ॥

ततः प्रायश्चित्तप्रकरणम् ५ । तत्रादौ कर्मविपाकः १ । महापातकादिनिमित्तपरिगणनम् २ । महापातकप्रायश्चित्तान्यातिदेशिकसहितानि ३ । उपपातकप्रायश्चित्तानि ४ । प्रकीर्णकप्रायश्चित्तप्रकरणम् ५ । पतितत्यागविधिः ६ । व्रतग्रहणविधिः ७ । रहस्यप्रायश्चित्ताधिकारः ८ । कृच्छ्रादिलक्षणम् ९ । इति प्रकरणानि ॥

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः ।
धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥ १ ॥

इति याज्ञवल्क्यमुनिशास्त्रगता विवृतिर्न कस्य विहिता विदुषः ।
प्रमिताक्षरापि विपुलार्थवती परिषिञ्चति श्रवणयोरमृतम् ॥ २ ॥

गम्भीराभिः प्रसन्नाभिर्वाग्भिर्न्यस्ता मिताक्षरा ।
अनल्पार्थाभिरल्पाभिर्विवृतिर्विहिता मया ॥ ३ ॥

नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं
नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः ।
विज्ञानेश्वर(१)पण्डितो न भजते किञ्चा(२)न्यदन्योपम
श्चाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ॥ ४ ॥

स्रष्टा वाचां (३)मधुरवपुषां विद्वदाश्चर्यसीम्नां
दातार्थानामतिशयजुषामर्थि(४)सार्थार्थनायाः ।
ध्याता मूर्तेर्मुरविजयिना जीवतादार्कचन्द्र
जेतारीणां तनुसहभुवां तत्त्वविज्ञाननाथः ॥ ५ ॥

आ सेतोः कीर्तिराशे रघुकुलतिलकस्या च शैलाधिराजा
(५)दा च प्रत्यक्पयोधेश्चटुलतिमिकुलोत्तुङ्गरिङ्गत्तरङ्गात् ।
आ च (६)प्राचः समुद्रान्नतनृपतिशिरोरत्नभाभासुराङ्घ्रिः
पायादाचन्द्रतारं जगदिदमखिलं विक्रमादित्यदेवः ॥ ६ ॥

अन्तर्मुखानि यदि खानि तपस्ततः किं
नान्तर्मुखानि यदि खानि तपस्ततः किम् ।
अन्तर्बहिर्यदि हरिश्च तपस्ततः किं
नान्तर्बहिर्यदि हरिश्च तपस्ततः किम् ॥ ७ ॥

## समाप्तेयं समिताक्षरा याज्ञवल्क्यस्मृतिः ॥

### समाप्तश्चायं ग्रन्थः ।

(१) विज्ञानेश्वरपण्डितेन भजते को वा मनीषी तुलामाकल्पं—इति पाठान्तरम् ।
(२) दन्योपममाकल्प ङ । (३) मधुरवपुषां ङ ।
(४) मर्थिनामर्थितायाः । (५) यावत्प्रत्यक् । (६) प्राचीसमुद्रादमितनृपशिरोरत्न ।

श्री ।

# याज्ञवल्क्यस्मृतिपद्यानामकाराद्यनुक्रमणिका ।



* एतच्चिह्नाङ्कितानि पद्यानि प्रक्षिप्तानि सन्ति ।

# ग्रन्थग्रन्थकृन्नामानि ।

नामानि
नरसिंहपुराणम्
नारदः
नारायण
निगमपरिशिष्टम्
नैयायिका.
न्यायकुसुमाञ्जलिः
पतञ्जलि.
पद्मपुराणम्
पराशर
परिशिष्टम्
पाणिनि
पातञ्जलटीका
पातञ्जलभाष्यम्
पातञ्जलसूत्रम्
पातञ्जलाः
पारस्कर
पारस्करगृह्यम्
पारिजात
पार्थसारथिमिश्रा.
पितामह
पुलस्त्य
पैठीनसि
प्रकाश.
प्रजापति
वह्वृचगृह्यपरिशिष्टम्
वह्वृचपरिशिष्टम्
वृहद्विष्णु
वृहस्पतिः
वौधायन
वौधायनतैत्तिरीयसूत्रकार.
ब्रह्मपुराणम्
ब्रह्माण्डपुराणम्
भगवद्गीता
भट्टपाद
भट्टाचार्या
भवदेव
भविष्यपुराणम्
भविष्योत्तरपुराणम्
भाष्यम् (व्याक०)
भाष्यकार

नामानि
भोजराज.
मत्स्यपुराणम्
मनु
मनुटीका
मन्त्रप्रकाश.
मरीचि
महाभारतम्
माध्यन्दिनीयगोभिलीयम्
मार्कण्डेयः
मार्कण्डेयपुराणम्
मिताक्षरा
मिताक्षराकारः
मिश्रा.
मिहिराचार्य
मीमांसका
मेधातिथि.
मैत्रायणीयगृह्यपरिशिष्टम्
यम.
याज्ञवल्क्य.
योगसंहिता
योगिसंहिता
योगी
योगीश्वर
रत्नमाला
रत्नाकर
राजा
रामायणम्
लघुहारीत.
लिखित
लिङ्गपुराणम्
लौगाक्षि
वराहपुराणम्
वर्धमान
वसिष्ठ
वाचस्पतिमिश्र
वाजसनेयम्
वाजसनेयिन
वामनपद्धति
वायुपुराणम्
विश्वरूप.

श्रीः।

# मिताक्षराधृतानां ग्रन्थानां ग्रन्थकाराणां च

# वर्णानुक्रमणिका।